# श्रीरङ्गदेशिकनिर्मिता गादाधरीसामान्यनिरुक्ति–विवेचना ॥

श्रीमते रामानुजाय नमः ॥ अनुमितिपदस्यानुमितिसामान्यपरत्वेऽतिप्र-
सङ्गात्प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमावश्यकमिति (गादाधरी) ॥

नन्वत्र प्रकृतहेतुकत्वनिवेशनं व्यर्थं प्रकृतपक्षसाध्यकत्वमात्रेणाप्यतिप्रसङ्गवारणसंभवात् । नच स्वरूपासिद्धिसंग्राहकं तदिति वाच्यम् लक्षणयानुमितिकारणज्ञानमात्रपरत्व इत्यत्र परामर्शस्याप्रतिबध्यत्वं वदता ग्रन्थकारेण पूर्वकल्पे स्वरूपासिद्ध्यसंग्रहस्याप्यभिप्रेतत्वात् । किञ्च प्रकृतहेतुकत्वनिवेशेपि कथं

स्वरूपासिद्धिसंग्रहः प्रकृतहेतुकत्वंहि प्रकृतहेतुमत्तानिश्चयाव्यवहितोत्तरत्वं तच्च ह्रदो वह्निमान्धूमादित्यत्र ह्रदो वह्निमानित्याकारकानुमितावेवास्ति तत्रच स्वरूपासिद्धिप्रतिबध्यता नास्ति आचार्य्यव्यतिरिक्तमतेनुमितेः पक्षांशे हेत्वनवगाहित्वादिति चेन्न। पर्वतो वह्निमान्महानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमादित्यत्र महानसीयवह्न्यभाववत्पर्वतरूपबाधसंग्रहाय तस्यावश्यकत्वात् । अन्यथा प्रकृतहेतुकत्वानुपादाने शुद्धपर्वतो वह्निमानित्याकारकानुमितेरपि प्रकृतपक्षसाध्यकत्वेन तत्र महानसीयवह्न्यभाववत्पर्वतरूपबाधनिश्चयप्रतिबध्यताया अभावेन तदसंग्रहापत्तेः। तन्निवेशेच साध्यव्याप्यतादृशहेतुमत्तानिश्चयस्येतरविशेषबाधनिश्चयरूपतया तदनन्तरं जायमाना पर्वतो वह्निमान् महानसीयवह्निमानिति समूहालम्बनानुमितिरेव तस्याश्च तादृशबाधनिश्चयप्रतिबध्यत्वेन तत्संग्रहः । नच तथापि यत्र तादृशहेतुमत्तानिश्चयात्पूर्वं पर्वतो महानसीयवह्न्यभाववानिति बाधनिश्चयः। तत्र पर्वतो वह्निमानित्येवानुमितिर्जायते तत्रच तादृशबाधनिश्चयप्रतिबध्यत्वं नास्तीति तदसंग्रहो दुर्वार एवेति वा-

१ तदऽसंग्रहे हेतोर्दुष्टत्वव्यवहारस्तु साधनाऽप्रसिद्धिमादाय पर्वतत्वावच्छेदेन निरुक्तवह्न्यभावस्य साधनतावच्छेदककुक्षौ प्रविष्टत्वात् सामानाधिकरण्येन तथात्वेतु सामान्यरूपेण तद्धर्मिणि तद्वत्ताबुद्धिंप्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति प्राचीनमतानुरोधेन सामानाधिकरण्येनापि निरुक्तवह्निमत्पर्वतस्य साधनाऽप्रसिद्धित्वमिति श्रीरङ्गदेशिकपूज्यपादानामाशयः ।

च्यम् । तथापि ज्ञानपक्षकविषयितया वह्न्यादिसाध्यकवह्न्यभाववद्धूमवत्कालीनमहानसीयवह्नीतरवह्न्यभाववत्तज्ज्ञानकालीनधूमादिहेतुकस्थले महानसीयवह्न्यभाववत्तज्ज्ञानात्मकबाधसंग्रहार्थं तस्यावश्यकत्वात् । तत्र प्रकृतहेतुकत्वानिवेशे ज्ञानं वह्निमदित्याकारकानुमितेरपि प्रकृतपक्षसाध्यकानुमितितया तत्र तादृशबाधनिश्चयप्रतिबध्यत्वाभावात् । प्रकृतहेतुकत्वनिवेशे तु तादृशहेत्ववगाहिपरामर्शानन्तरं ज्ञानं वह्निमदित्यनुमितिस्तु न जायते तादृशपरामर्शस्य धूमावच्छेदेन वह्न्यभावावगाहिनिश्चयविशिष्टप्रकृतपक्षे धूमविशेषावगाहिनिश्चयरूपतया तादृशानुमितिप्रतिबन्धकत्वात् । किन्तु म-

१ किन्तु महानसीयवह्निप्रकारकानुमितिरेव जायत इति वदतां श्रीरङ्गदेशिकपूज्यचरणानामयमाशयः महानसीयवह्नि-

हानसीयवह्निप्रकारकानुमितिरेव जायते तत्रच तादृशबाधनिश्चयप्रतिबध्यत्वं चास्तीति तत्संग्रहः ।
संयोगादिसंबन्धेन वह्नेः साध्यत्वे धूमावच्छेदेन संयोगादिसम्बन्धेन वह्न्यभावावगाहिनिश्चयविशिष्टपक्षे

---

प्रकारकानुमितित्वेन निरुक्तहेतुमत्तानिर्णयत्वेन कार्यकारणभावविरहेपि निरुक्तानुमितीयमहानसीयवह्निप्रकारतावत्त्वेन स्वेतरविशेषबाधविषयकत्वेन च तदनुमितिहेतुमत्ताज्ञानयोः कार्य्यकारणभावे बाधकाभावात् । नच तत्र साध्यव्याप्यहेतुमत्ताज्ञानस्य नियमेन साध्याभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयरूपत्वेन प्रतिबन्धकतावच्छेदकविषयतावत्त्वेन निरुक्तज्ञानस्य कारणत्वमप्रामाणिकमिति वाच्यम् । धूमवति वह्न्यभावोऽव्याप्यवृत्तिरित्याद्यव्याप्यवृत्तित्वज्ञानकाले निरुक्तपरामर्शस्य कारणत्वे बाधकाभावादिति ज्ञेयः ।

ताद्दशधूमावगाहिपरामर्शकाले संयोगादिसंबन्धेन वह्न्यादिसामान्यानुमितेरिव वह्निविशेषानुमितेरप्यसंभवात् । विषयितया साध्यानुसरणम् । नचैवमप्येताद्दशपरामर्शकाले धूमवति वह्न्यभावोऽव्याप्यवृत्तिरिति ज्ञानं महानसीयवह्न्यभाववत्तज्ज्ञानमितिच ज्ञानं तदनन्तरं वह्निसामान्यानुमितिरेव जायते तत्रच ताद्दशबाधनिश्चयप्रतिबध्यत्वं नास्तीति कथं तत्संग्रह इति वाच्यम् । याद्दशाङ्करविशेषसाध्यकैताद्दशहेतुमति साध्यसामान्याभावेऽव्याप्यवृत्तित्वज्ञानं नास्ति तत्रत्यदोषसंग्रहस्यैवं विवक्षया सम्भवादिति ॥ श्रीः ॥ ॥ ॥ ॥ ॥

संबन्धिपदं संबन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयता-

त्मकनिरूपकत्वस्य लाभायेति तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्य-
कप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुका-
नुमितिनिष्ठकार्यतासाक्षात्कारजनकसाक्षात्कारविषयताश्रयग्रहनिष्ठप्रतिब-
ध्यतानिरूपितप्रतिबन्धकशालियथार्थज्ञानविषयत्वमिति पर्य्यवसितम् ॥

अत्रानुमितिनिष्ठकार्य्यतानिवेशे पर्वतो वह्निमानित्यत्र पर्वतो वह्निमान्ह्रदश्च तथेत्याकारकानुमितिनि-
ष्ठवह्निमद्ध्रदविषयकानुमितित्वावच्छिन्नकार्य्यतामादाय ह्रदो वह्निमानित्यसमूहालम्बनानुमितिप्रतिबन्धक-
प्रमाविषये वह्न्यभाववद्ध्रदेऽतिव्याप्तिः। तादृशानुमितित्वव्यापककार्य्यतानिवेशे नानाविधव्याप्त्यवगा-

ह्निपरामर्शजन्यानुमितिनिष्ठैककार्य्यताविरहादसंभवः । अतस्तादृशानुमितित्वावच्छिन्नकार्य्यता निवेश्या
अत्रच प्रकृतहेतुकत्वानिवेशे पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभाववद्वृत्तिद्रव्येऽतिव्याप्तिः । पर्वतप-
क्षकवह्निसाध्यकानुमितित्वावच्छिन्ना या वह्निव्याप्यद्रव्यवान्पर्वत इति परामर्शकार्य्यता तत्साक्षात्कारजन-
कसाक्षात्कारविषयतादृशपरामर्शप्रतिबन्धकप्रमाविषयत्वात्तस्य तन्निवेशेतु न तादृशपरामर्शः उक्त-
साक्षात्कारजनकसाक्षात्कारविषय इति न दोषः । नचैवमपि वह्निव्याप्यधूमवान्पर्वतो वह्निव्याप्यद्रव्यवां-
श्चेत्याकारकसमूहालम्बनपरामर्शोत्तरपर्वतो वह्निमानित्याकारकानुमितौ या कार्य्यता सा वह्निव्याप्यधूम-
वान्पर्वत इति परामर्शनिरूपिता वह्निव्याप्यद्रव्यवान्पर्वत इति परामर्शनिरूपिता चोभयलिङ्गकानुमि-

तित्वावच्छिन्नैवेति तादृशकार्य्यतासाक्षात्कारजनकसाक्षात्कारविषयो द्रव्यलिङ्गकपरामर्शोपीत्युक्ताति-
व्याप्तिर्दुर्वारैवेति वाच्यम् । प्रकृतहेतुकत्वावच्छिन्नत्वस्यानुमितिनिष्ठकार्य्यतायां निवेशनीयत्वात् ।
तच्च प्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठनिरूपकतासंबन्धावच्छिन्नावच्छेदकतानिरूपकीभूता या
निश्चयनिष्ठोत्तरत्वसंबन्धावच्छिन्नावच्छेदकता तन्निरूपकत्वम् तथाच धूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेद-
कताकनिश्चयनिष्ठावच्छेदकतानिरूपकीभूता य कार्यता तस्या धूमलिङ्गकपरामर्शनिरूपिततया द्रव्य-
लिङ्गकपरामर्शनिरूपितत्वाभावेन तादृशपरामर्शस्योक्तकार्य्यतासाक्षात्कारजनकसाक्षात्काराविषयत्वात् ।
नन्वत्र प्रकृतहेतुकत्वावच्छिन्नत्वस्य कार्य्यतायां निवेशे प्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठाऽ-

वच्छेदकताकनिश्चयनिष्ठावच्छेदकतानिरूपकीभूता या प्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितप्र-
कृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्ना कार्य्यता तत्साक्षात्कारजनकसाक्षात्का-
रविषयेत्यादिलक्षणं पर्य्यवसितम् । एवमपि पर्वतो वह्निमान्धूमादित्यादौ काञ्चनमयत्वाभाववद्धूमादावति-
व्याप्तिः । वह्निव्याप्यकाञ्चनमयधूमवान्पर्वत इति परामर्शनिरूपिता या पर्वतो वह्निमानित्यनुमितित्वाव-
च्छिन्ना कार्य्यता तस्या अपि प्रकृतहेतुतावच्छेदकीभूतधूमत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपका-
वच्छेदकतानिरूपकत्वात् । तत्साक्षात्कारजनकसाक्षात्कारविषयतादृशपरामर्शप्रतिबन्धककाञ्चनमयत्वा-
भाववान्धूम इति प्रमाविषयत्वात्तस्य । नच प्रकृतहेतुतावच्छेदकपर्याप्तावच्छेदकतानिरूपकप्रकारतानिष्ठा-

ऽवच्छेदकतानिरूपकाऽवच्छेदकताकत्वेन कार्य्यता निवेशनीया काञ्चनमयधूमवान्पर्वत इति परामर्शो-
त्तरानुमितिनिष्ठकार्य्यताच काञ्चनमयत्वधूमत्वधर्म्मद्वयपर्य्याप्तावच्छेदकतानिरूपकप्रकारतानिष्ठाऽवच्छेद-
कतानिरूपकावच्छेदकताका नतु हेतुतावच्छेदकशुद्धधूमत्वपर्य्याप्तावच्छेदकतानिरूपकाऽवच्छेदकतानि-
रूपकावच्छेदकतानिरूपकावच्छेदकताकेति नोक्तदोष इति वाच्यम्। सर्वत्र परामर्शनिष्ठा यानुमितिकार्य्य-
तावच्छेदकता तन्निरूपितप्रकारतानिष्ठावच्छेदकतया निरूपितस्यावच्छेदकतात्वावच्छिन्नस्य हेतुतावच्छे
दकव्याप्त्योरेव पर्य्याप्तत्वादसंभवापत्तेः। नच हेतुतावच्छेदकानिष्ठावच्छेदकताभिन्ना सती व्याप्तिनिष्ठा-

---

१ अत्र चावच्छिन्नत्वसम्बन्धेन हेतुतावच्छेदकव्याप्त्योः प्रकारत्वांशेऽवच्छेदकत्वमभिमतमिति बोध्यम्।

भिन्ना याऽवच्छेदकता

ऽवच्छेदकताभिन्ना सती प्रकारतात्वनिष्ठाऽवच्छेदकता तदनिरूपकप्रकारतानिष्ठावच्छेदकताकनिश्चय-
त्वावच्छिन्नावच्छेदकताकत्वं कार्यतायां निवेशनीयमिति वाच्यम्। नानाविधव्याप्तिष्वेकविधव्याप्तिनिवेशे
ऽन्वयव्यतिरेकव्याप्त्यन्यतरानिवेशेच साधारणानुपसंहारित्वादावव्याप्तेः। सकलविधव्याप्तिनिष्ठावच्छेद-
कताभेदनिवेशेच वह्निमान्गगनादित्यादौ वह्न्यसमानाधिकरणवह्न्यभावव्यापकीभूताभावप्रतियोगिगगने-
ऽतिव्याप्तिः। गगनव्यापकवह्निसमानाधिकरणवह्न्यभावव्यापकाभावप्रतियोगिगगनवानिति परामर्शस्य
पर्वतो वह्निमानित्यनुमितिंप्रति कारणतया तादृशानुमितिनिष्ठकार्य्यत्वस्य तादृशपरामर्शनिरूपितस्य ग-
गनाऽन्वयव्याप्तिव्यतिरेकव्याप्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रकारतानिष्ठावच्छेदकताानि-

रूपकनिश्चयनिष्ठावच्छेदकतानिरूपकत्वात् तत्साक्षात्कारजनकसाक्षात्कारविषयपरामर्शनिष्ठवह्निसामाना-
धिकरण्यप्रकारकवह्न्यभावव्यापकाभावप्रतियोगिगगनत्वावच्छिन्नविशेष्यकबुद्धित्वावच्छिन्ननिरूपितप्र-
तिबन्धकताशालिप्रमाविषयत्वात्तादृशगगनस्येति चेन्न । प्रकृतहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-
नुयोगितावच्छेदकधर्म्मवृत्तिविशेष्यत्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपकनिश्चयनिष्ठावच्छेदकता-
निरूपकत्वस्य कार्य्यतायां विवक्षणीयत्वात् । तादृशधर्म्मवृत्तित्वं च विशेष्यतायां स्वनिरूपिताव-
च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन तथाच काञ्चनमयधूमविषयकपरामर्शवह्न्य-
भावव्यापकाभावप्रतियोगिगगनविषयकपरामर्शनिष्ठा या कार्य्यतावच्छेदकता तदवच्छेदकताश्रयीभूता

या धूमगगनादिनिष्ठप्रकारता तदवच्छेदकव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यताच न हेतुतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकीभूतधूमत्वगगनत्वनिष्ठैकत्वनिष्ठेति नातिव्याप्तिः । ननु परामर्शाव्यवहितोत्तरत्वस्य कार्य्यतावच्छेदकघटकत्वे प्रकृतपक्षसाध्यकानुमितित्वस्य कार्य्यतावच्छेदकत्वे प्रयोजनाभावेन तदवच्छिन्नकार्य्यताघटितलक्षणस्यासम्भवः । नच परामर्शाव्यवहितोत्तरत्वावच्छिन्नंप्रति परामर्शस्य समवायघटितसामानाधिकरण्येन कारणत्वे यदात्मनि परामर्शस्तदात्मनि तदुत्तरं यत् घटात्मगतद्वित्वमुत्पद्यते तस्य घटेपि समवायेनोत्पत्त्या तत्र परामर्शस्य व्यभिचार इति वाच्यम् । अनुमितित्वस्य कार्य्यतावच्छेदकत्वमात्रेण तादृशव्यभिचारवारणसंभवेन पक्षसाध्यविषयतायाः कार्य्य-

तावच्छेदककुक्षावप्रवेशादिति चेन्न। अप्रामाण्यज्ञानानां तत्तद्व्यक्त्यभावकूटस्य कारणतावच्छेदककुक्षौ नि-
वेशपक्षे यत्र भावि ज्ञानं धूमाभाववति धूमप्रकारकमिति भ्रमत्वज्ञानं तदनन्तरंच पर्वतो वह्निव्या-
प्यधूमवान् घटव्याप्यपटवानिति परामर्शस्तदनन्तरं घटानुमितिवह्न्यनुमिती तत्र परामर्शद्वितीयक्षणे
वह्न्यनुमितिवारणाय तादृशाप्रामाण्यज्ञानव्यक्त्यभावघटितकूटस्यैव तादृशपरामर्शकारणतावच्छेदककुक्षौ
निवेशनीयतया तादृशकारणतावच्छेदकावच्छिन्नधूमपरामर्शस्य तादृशपरामर्शद्वितीयक्षणोत्पन्नघटानु-
मितौ व्यभिचारवारणाय तादृशाप्रामाण्यज्ञानव्यक्त्यभावघटितकूटस्य कार्य्यतावच्छेदककोटावपि नि-
वेशनीयतया तादृशाप्रामाण्यज्ञानास्कन्दितधूमालोकविषयसमूहालम्बनपरामर्शोत्तरं पर्वते वह्न्यनुमितौ

व्यभिचारवारणाय तादृशाप्रामाण्यज्ञानव्यक्त्यभावानां कार्य्यतावच्छेदककोटिप्रविष्टकूटान्तर्भावेपि उक्तस्थ-
ले तदनिवेशेन लाघवाय पक्षसाध्यावगाहित्वस्य कार्य्यतावच्छेदककोटौ निवेशौचित्यात् । नन्वेवं सति
तादृशकार्य्यतावच्छेदकविषयत्वावच्छिन्नत्वेन प्रतिबध्यतानिवेशेनैवातिव्याप्तिवारणसंभवे कार्य्यतासा-
क्षात्कारजनकसाक्षात्कारविषयताशालिग्रहनिष्ठत्वेन प्रतिबध्यतानिवेशनं व्यर्थमुत्तरकल्पानुसरणं चानुचि-
तमिति चेन्न । पर्वतो वह्निमान्धूमादित्यादौ घटाभाववत्पर्वतेऽतिव्याप्तेः तत्र पर्वतो वह्निव्याप्यधूम-
घटवानित्येकत्र द्वयमिति रीत्या ज्ञानीया या घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यता तस्या अपि
वह्निव्याप्यधूमप्रकारतानिरूपितविशेष्यताभिन्नायाः कार्य्यतावच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरू-

पितप्रतिबन्धकताशालिप्रमाविषयत्वस्य तत्र सत्त्वात् । नचैवं तादृशकार्य्यतानवच्छेदकविषयतानवच्छि-
न्नत्वस्य प्रतिबध्यतायां विवक्षणेनोक्तातिव्याप्तिर्घटाभावत्पर्वतविषयकनिश्चयनिरूपितप्रतिबध्यतायाः ता-
दृशकार्य्यतानवच्छेदकघटत्वावच्छिन्नप्रकारत्वावच्छिन्नत्वादिति वाच्यम् । ह्रदो वह्निमान्धूमादित्यादौ
वह्न्यभाववद्ध्रदादावव्याप्त्यापत्तेस्तज्ज्ञानीयप्रतिबध्यतावच्छेदकत्वस्य महानसीयवह्निमान् ह्रद इत्याकार-
कज्ञानीयह्रदत्वावच्छिन्नविशेष्यतानिरूपितमहानसीयवह्नित्वावच्छिन्नप्रकारतायां सत्त्वात् । तस्याश्च ता-
दृशकार्य्यतायामनवच्छेदकत्वात् । एवं घटो गगनवानित्यादाववृत्तिगगनादावव्याप्तिः । तादृशदोषविष-
यकनिश्चयप्रतिबध्यत्वस्य तादृशकार्य्यतावच्छेदकविषयिताशून्यानिर्द्धर्म्मितावच्छेदककज्ञानसाधारणतया

कार्य्यतावच्छेदकविषयित्वानवच्छिन्नत्वाभावात् । नच तादृशकार्य्यतानवच्छेदकविषयताशून्यज्ञानीयविषयत्वावच्छिन्नत्वेन प्रतिबध्यता निवेश्या तथाच तादृशकार्य्यतानवच्छेदकमहानसीयवह्नित्वावच्छिन्नविषयिताशून्यह्रदो वह्निमानित्यनुमितिमादाय तादृशनिर्द्धर्म्मितावच्छेदकज्ञानीयविषयताशून्यघटो गगनवानित्याकारकज्ञानमादाय च पूर्वोक्तस्थलद्वये च लक्षणसमन्वयः । वह्निव्याप्यधूमघटवान्पर्वत इत्याकारकज्ञानीयघटत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताया उक्तज्ञानीयत्वाभावादेव तदवच्छिन्नप्रतिबध्यतामादाय नोक्तातिव्याप्तिश्चेति वाच्यम् । तादृशकार्य्यतानवच्छेदकनिरवच्छिन्नविशेष्यताशून्यत्वस्य क्वापि ज्ञानेऽसत्त्वेनासम्भवापत्तेः । नच तथापि कार्य्यतानवच्छेदकविषयताशून्यत्वमित्यनेन ॥ ९ ॥

कार्य्यतावच्छेदकविषयताविशिष्टान्यविषयताशून्यत्वस्य विवक्षणान्नासम्भवः । विषयतावैशिष्ट्यं च स्व-

१ अत्राचार्यचरणतात्पर्य्यानभिज्ञाः पण्डितंमन्याः यत् प्रलपन्ति स्वतादात्म्यादिषडन्यतमशरीरे स्वावच्छेद्यनिरूपितत्वस्वावच्छेद्यनिरूपितावच्छेद्यत्वान्यतरनिवेशेनैव सर्वानर्थपरिहारे षडन्यतमत्वेन सम्बन्धनिवेशो निष्प्रयोजनकः तथाहि प्राथमिकसम्बन्धद्वयसंग्राह्यह्रदत्वावच्छिन्नविशेष्यताया ह्रदत्वादिनिष्ठनिरवच्छिन्नप्रकारतायाश्च सम्बन्धघटकस्वपदग्राह्यह्रदत्वनिष्ठावच्छेदकतां ह्रदत्वावच्छिन्नविशेष्यतां चादाय संग्रहो बोध्यः तथैवान्ययोर्द्वयोरपीति । तन्न समीचीनम् । स्वावच्छेद्यनिरूपितत्वादिशरीरे स्वावच्छेद्यस्य स्वावच्छेद्यत्वेन निवेशाऽयोगात् । नच तथा निवेशे क्षतिविरहः स्वावच्छेद्यत्वस्यानुगतस्याभावादऽतः किञ्चित्सम्बन्धनिष्ठावच्छेदकतानिरूपकस्वावच्छेद्यत्वेनैव तन्निवेशो वाच्यः तथाच ह्रद-

तादात्म्यस्वावच्छिन्नत्वस्वनिरूपितत्वस्वनिरूपितावच्छेद्यत्वस्वावच्छेद्यनिरूपितत्वस्वावच्छेद्यनिरूपिता-
वच्छेद्यत्वैतदन्यतमसम्बन्धेन अत्र प्रथमद्वितीयसम्बन्धनिवेशश्च ह्रदो वह्निमानित्यत्र ह्रदत्वावच्छिन्न-
विशेष्यताया ह्रदत्वनिरूपितनिरवच्छिन्नविशेष्यतायाश्च संग्रहाय तृतीयचतुर्थसम्बन्धनिवेशश्च धूमाभाव-
वद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिवारणाय। अन्यथा धूमाभाववद्वृत्तिवह्निमांस्ताद्दशालोकवान्धूमाभावव-
द्वृत्तिमानित्यादिनानाहेतुतावच्छेदकावगाहिहेतुतावच्छेदकानवगाहिनानाविधपरामर्शानामेकरूपेणैव का-

---

त्वावच्छिन्नकार्य्यतावच्छेदकविषयत्वावच्छेद्याया निरवच्छिन्नविशेष्यतायाः किञ्चित्सम्बन्धावच्छिन्नत्वासम्भवेन ह्रदत्व-
निष्ठनिरवच्छिन्नप्रकारतादिसंग्राहकस्वतादात्म्यादि निवेश्यमिति विदुषां विमर्शः।

रणतया कार्य्यतावच्छेदककोटावेकधर्म्मावच्छिन्नंप्रति व्यापकसामानाधिकरण्यादिनानाविधव्याप्त्यवगाहि-
परामर्शकारणतायां व्यभिचारवारणाय प्रवेशनीयाव्यवहितोत्तरत्वशरीरे पूर्वोक्तपरामर्शानामेकरूपेणैव
प्रवेशात् हेतुतावच्छेदकवह्नित्वादिनिष्ठाया निरवच्छिन्नविशेष्यतानिरूपितप्रकारताया व्याप्तिप्रकारतानि-
रूपितधर्म्मितावच्छेदकतायाश्च तादृशानुमितिनिष्ठकार्य्यतानवच्छेदकतया तच्छून्यत्वस्य तादृशव्य-
भिचारज्ञानप्रतिबध्यज्ञानावृत्तितयाऽव्याप्त्यापत्तेः । पञ्चमषष्ठसम्बन्धनिवेशश्च पर्वतो वह्न्यभाववानित्यादौ
वह्निमत्पर्वतरूपबाधसंग्रहाय । अन्यथा वह्न्यभावव्याप्यहेतुमत्तापरामर्शस्य लाघवादवच्छिन्नप्रतियोगि-
ताकत्वसंबन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नविधेयतात्वेन वह्न्य-

भावत्वावच्छिन्नविधेयताशाल्यनुमितित्वावाच्छिन्नं प्रत्येव कारणतया वह्निनिष्ठवह्नित्वनिरूपितनिरवच्छि-
न्नविशेष्यत्वप्रकारत्वतन्निरूपितविशेष्यत्वादीनां कार्यतानवच्छेदकतया तच्छून्यत्वस्य तादृशबाधज्ञान-
प्रतिबध्यज्ञानेऽसत्त्वेनाव्याप्त्यापत्तेरिति वाच्यम्। पर्वतो धूमवान्गगनादित्यादावाधेयत्वप्रतियोगित्वोभ-
याभाववद्गगनेऽतिव्याप्त्यापत्तेस्तादृशकार्य्यतानवच्छेदकविषयताशून्यत्वस्य गगनव्यापकधूमसामाना-
धिकरण्यधूमाभावव्यापकीभूताभावप्रतियोगित्ववद्गगनवान्पर्वत इत्याकारके व्याप्तिद्वयांश एकत्र द्वयमि-
ति रीत्या परामर्शे तादृशानुमितिकारणतासत्त्वेन तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वस्य तत्र सत्त्वात्। य-
त्किंचित्कार्य्यतानवच्छेदकविषयताशून्यत्वस्य ज्ञानविशेषणत्वेन तद्दोषवारणेपि ह्रदो वह्निमान्धूमादि-



त्यादौ वह्न्यभाववदवृत्तिधूमतादृशालोकोभयाभाववद्ध्रदेतिव्याप्तिरशक्यपरिहारा एकत्र द्वयमिति रीत्या
वह्न्यभाववदवृत्तिधूमालोकवानिति ज्ञाने उभयसाधारणसाध्याभाववदवृत्तित्वावच्छिन्नप्रकारताशालि-
निश्चयाव्यवहितोत्तरत्वघटितधर्म्मावच्छिन्नयत्किंचित्कार्य्यतानवच्छेदकविषयताशून्यत्वस्याक्षतत्वात्। ए-
वमव्यवहितोत्तरत्वस्य कार्य्यतावच्छेदककोटौ निवेशनीयतयाऽप्रामाण्यज्ञानानामनुगतरूपेणोत्तेजकता-
मते पक्षसाध्यविषयतायाः प्रयोजनविरहेण कार्य्यतावच्छेदककुक्षावप्रवेशेन तादृशकार्य्यत्वाप्रसि-
द्ध्याऽसम्भवस्य दुर्वारत्वाद्गौरवाच्चेति दिक्। अनुमितिनिष्ठकार्य्यतासाक्षात्कारजनकसाक्षात्कारीय-
विषयताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे प्रकृतानुमितिनिष्ठकार्य्यतान्यानुमितिनिष्ठकार्य्यताविषयकसमू-

ह्यालम्बनसाक्षात्कारजनकसाक्षात्कारविषयतां ताद्दशकार्य्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितज-
नकताश्रयसमूहालम्बनसाक्षात्कारविषयतां चादाय पर्वतो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादावतिव्या-
प्तिरतस्ताद्दशकार्य्यताविषयकसाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकसाक्षात्कारीयविष-
यताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशनीया । नन्वत्र प्रथमसाक्षात्कारनिवेशे किं प्रयोजनमिति चेन्न
अनुमितिनिष्ठकार्य्यताविषयकत्वावच्छिन्नजन्यतानिवेशेऽनुमितिः परामर्शकार्य्येत्यनुमितिनिष्ठकार्य्यत्व
विषयकत्वानुमितित्वाद्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका या प्रत्यक्षपरामर्शीयहेतुविषयता तदा-
दाय हेतुभूतभूतलं घटवदिति ज्ञाननिष्ठप्रतिबध्यतामादाय पर्वतो वह्निमानित्यादौ घटाभाववद्भूतलेऽ-

तिव्याप्तेः। साक्षात्कारत्वनिवेशेतु परामर्शकार्य्यतायास्तदनवच्छिन्नत्वेन नायं दोषः। द्वितीयसाक्षात्कारत्वानिवेशे तादृशकार्य्यतासाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूता याऽनुमितित्वेन भूतलं घटवदिति ज्ञाननिष्ठसाक्षात्काराविषयता तदाश्रयग्रहनिष्ठप्रतिबध्यतामादाय घटाभाववद्भूतलेऽतिव्याप्तिः। यद्धर्म्मावच्छिन्नविषयता तादृशजनकतावच्छेदिका तद्धर्म्माश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे परामर्शघटकज्ञानत्वमादाय स एव दोषः। अतो यद्धर्म्मावच्छिन्नग्रहत्वव्यापिका तादृशजनकतेति विवक्षणीयं तथाचासम्भवः। अनुमितित्वावच्छिन्नग्रहत्वाश्रयानुमितिशाब्दादौ तादृशजनकताविरहात्।

अतः साक्षात्कारत्वनिवेशः। ननु वस्तुतस्तु तत्कार्य्यताव्यक्तिसाक्षात्कारत्वावच्छिन्नंप्रति तदाश्रयव्यक्तिसा क्षात्कारत्वेन तन्निरूपकव्यक्तिसाक्षात्कारत्वेनैव हेतुतया प्रकृतपक्षसाध्यहेतुकानुमितिनिष्ठकार्य्यतानिष्ठाधेयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयतानिष्ठावच्छेदकतानिरूपकजन्यतानिरूपितजनकतावच्छेदकविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशे ऽनुमितिनिष्ठकार्य्यताविधेयकानुमितित्वावच्छिन्नजन्यतानिरूपितसाध्यविषयतानिष्ठावच्छेदकतायां साध्यतावच्छेदकावच्छिन्नत्वस्यावच्छेदकतया साध्यस्याधेयतासम्बन्धेन नावच्छेदकत्वम्। भ्रमप्रमासाधारणसाध्यतावच्छेदकावच्छिन्नविषयताशाल्यनुमितित्वस्यैव परामर्शजन्यतावच्छेदकत्वात्। एवंच प्रथमसाक्षात्कारत्वानिवेशे पर्वतो वह्निमानित्यादौ

घटाभाववद्भूतले न प्रागुक्तरीत्यातिव्याप्तिः । एवं तादृशकार्य्यतासाक्षात्कारंप्रति तादृशानुमितित्वेना-
न्यावगाहिज्ञानस्य कारणत्वाभावेन द्वितीयसाक्षात्कारनिवेशस्यापि न सार्थक्यम् इति चेत् । अत्र क-
श्चित्। तद्व्यक्तेः स्वरूपतोभानमते प्रथमसाक्षात्कारत्वानिवेशे प्रागुक्तातिव्याप्तिः । स्वरूपतस्तद्व्यक्ति-
विधेयकानुमितिनिष्ठपरामर्शजन्यतायां साध्यविषयतायास्साध्यतावच्छेदकावच्छिन्नत्वेनावच्छेदकत्वासंभवे-
न साध्यनिष्ठविषयतात्वेनैवावच्छेदकत्वात्। द्वितीयसाक्षात्कारत्वानिवेशे तादृशकार्य्यतासाक्षात्कारत्वाव-
च्छिन्नंप्रति तदाश्रयव्यक्तिसाक्षात्कारत्वेन हेतुत्वेपि तदाश्रयानुमितेर्भूतलं घटवदिति ज्ञानस्यचानुमि-
तित्वेन यः साक्षात्कारस्तस्यापि हेतुतया तन्निरूपितानुमितित्वनिष्ठप्रकारतानिरूपितविशेष्यताया ए-

क्येन तादृशजनकतावच्छेदकतादृशाविषयताश्रयो भूतलं घटवदिति ज्ञानमिति तत्रातिव्याप्तिवारणाय यद्विषयताशालिसाक्षात्कारत्वव्यापिका तादृशजनकतेति वक्तव्यं तथाच साक्षात्कारत्वानिवेशेऽसंभवः अनुमितिशाब्दादौ जनकत्वाभावात् अतस्तन्निवेश इत्याह । वस्तुतः तादृशकार्य्यताविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितविषयतानिष्ठावच्छेदकतानिरूपिताधेयतासंबन्धावच्छिन्नावच्छेदकताश्रयग्रहनिष्ठप्रतिबध्यतानिवेशे न प्रागुक्तदोषावकाशः । परामर्शनिष्ठानुमितिकारणतायां हेतुविषयताया हेतुतावच्छेदकावच्छिन्नत्वेनैवावच्छेदकतया तादृशविषयतानिष्ठावच्छेदकतायां हेतोराधेयतासंबन्धेनावच्छेदकत्वाभावात् । अन्यथा हेतुतावच्छेदकरूपेणान्यावगाहिपरामर्शस्यानुमित्यजनकत्वापत्तेः । ए-

वंच तादृशानुमितिनिष्ठकार्य्यताविषयकानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकतावच्छेदकता न हे-
तुभूतभूतलं घटवदित्याकारकज्ञाननिष्ठा एवंचानुमितिभूतलंघटवदित्याकारकज्ञानयोर्योऽनुमितित्वेन
साक्षात्कारस्तस्य कार्य्यताविषयकसाक्षात्कारंप्रति कारणत्वेपि तदीयविषयताया अनुमितिनिष्ठ-
त्वेनैव जनकतावच्छेदकतया तत्र भूतलं घटवदिति ज्ञानस्याधेयतासंबन्धेनानवच्छेदकतयाच पूर्वोक्तदो-
षाभावात् । तथापि साक्षात्कारत्वं विषयताविशेषो नातिरिक्त इति मताभिप्रायेण साक्षात्कारत्वनिवेशः ।
किंच व्याप्यधर्म्मपुरस्कारेण निवेशसंभवे व्यापकधर्म्मपुरस्कारेण निवेशस्यानुमितिग्रन्थे भट्टाचार्य्यै-
णानङ्गीकृतत्वात्साक्षात्कारत्वनिवेशः । यद्वाऽऽधेयतासंबन्धावच्छिन्नावच्छेदकताश्रयग्रहनिष्ठप्रतिबध्य-

तालाभार्थमेव तन्निवेश इति दिक् । ननु तादृशकार्य्यतावैशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्र-
तिबन्धकतावच्छेदकयथार्थज्ञानविषयत्वम् लक्षणमास्तां कार्य्यतावैशिष्ट्यंच स्वाश्रयत्वस्वनिरूपितका-
रणतावत्त्वोभयसंबन्धेन तथाच पक्षे साध्यसाध्यव्याप्यहेत्ववगाह्यनुमित्यात्मकग्रहमादाय सर्वत्र लक्षणसमन्व-
य इति चेन्न । साधारण्यानुपसंहारित्वयोरव्याप्तेः अनुपसंहारित्वनिश्चयप्रतिबध्यत्वस्य तादृशोभयसं-
बन्धेन प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतपक्षसाध्यविषयकानुमितित्वघटितधर्म्मावच्छिन्नकार्य्यतावत्त्यां प्रकृ-
तपक्षे प्रकृतसाध्यतन्निरूपितान्वयव्याप्तिविशिष्टहेत्ववगाह्यनुमितावसत्त्वात् साधारण्यविषयकनिश्चयप्रति-
बध्यत्वस्य व्यतिरेकव्याप्त्यवगाहितादृशसमूहालम्बनानुमितावसत्त्वाच्च । नच कार्य्यतावैशिष्ट्यं ग्रहेऽनिवे-

श्य तादृशप्रतिबध्यतायां निवेश्यते वैशिष्ट्यंच स्वविशिष्टग्रहनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धा-
वच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन स्ववैशिष्ट्यंच पूर्वोक्तोभयसंबन्धेन एवंच
तादृशकार्य्यत्वविशिष्टप्रतिबध्यता साधारण्यानिश्चयप्रतिबध्यता ऽनुपसंहारित्वनिश्चयप्रतिबध्यताच स्वत्व-
स्याऽननुगततया स्वपदेन यत्किंचित्कार्य्यताया एव ग्रहणसंभवात् प्रकृतहेतुनिश्चयोत्तरतादृशानुमिति-
त्वघटितधर्म्मावच्छिन्नयत्किञ्चित्कार्य्यताविशिष्टग्रहे सर्वत्र साधारण्यानिश्चयप्रतिबध्यत्वस्य तादृशयत्कि-
ञ्चित्कार्य्यताविशिष्टग्रहेऽनुपसंहारित्वनिश्चयप्रतिबध्यत्वस्यच सत्त्वात् । परम्परायाः संबन्धत्वास्वीकारे
तादृशसंबन्धस्य प्रकारमुद्रया निवेशः कार्य्यः तत्प्रकारश्च प्रकृतहेतुविषयकनिश्चयोत्तरप्रकृतपक्षसाध्य-

सा०नि० ॥ १६ ॥

विवेचना.

विषयकानुमितित्वघटितधर्म्मावच्छिन्नकार्य्यतात्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकतादृशोभयसम्बन्धावच्छिन्नकार्य्यतानिष्ठाऽवच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपकभेदनिष्ठाऽवच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वानिष्ठप्रातियोगिताकाभाववत्प्रातिबध्यतात्वेनेति । स्वनिरूपितकारणतायाः सम्बन्धत्वानङ्गीकारे तु तादृशसमूहालम्बनात्मकग्रहनिष्ठाश्रयतानिरूपकनिरूपकतायां तन्निष्ठकारणतानिरूपकनिरूपकतायांच द्वयोरेकमिति रीत्या तादृशयत्किंचित्कार्य्यताव्यक्त्यवगाहिप्रतीतिसिद्धाभाव एव प्रतिबध्य-

॥ १६ ॥

तायां निवेशनीयः। तत्प्रकारश्च तादृशकार्य्यतात्वसमानाधिकरणोभयावृत्तिधर्म्मोनिष्ठनिरवच्छिन्नाव-च्छेदकतानिरूपकाधेयतासंबन्धावच्छिन्नावच्छेदकतानिरूपकनिरूपकतानिष्ठावच्छेदकतानिरूपकानिरू-

१ अत्रैतन्निवेशे नानाधर्मावच्छिन्नधर्मिकव्याप्तिज्ञानानामेकरूपेण कारणतापक्षमवलम्ब्य व्यभिचारेऽव्याप्तिमुद्भाव्य यः पूर्वकल्पः परित्यक्तः स असंगतः धूमवान्वह्नेरित्यादौ वह्न्यभाववद्ध्रदादावतिव्याप्तेस्समूहालम्बनानुमितिनिष्ठ-कार्यतानिष्ठतद्व्यक्तित्वस्यापि धर्तुं शक्यत्वात्। नच विधेयताद्वयानिरूपकानुमितिनिष्ठकार्यतात्वसमानाधिकरणोभ-यावृत्तित्वेन तस्य निवेशान्नातिव्याप्तिरिति वाच्यम्। पर्वतो वह्निमान्धूमादित्यत्र घटाभाववद्वृत्तिद्रव्येऽतिव्याप्तेरतत्र वह्निव्याप्यधूमवान् घटव्याप्यद्रव्यवांश्चेत्याकारकसमूहालम्बनपरामर्शात् घटस्य बाधनिश्चयकाले वह्न्यनुमितेरस्ता-

पितत्वनिष्ठावच्छेदकतानिरूपकाश्रयत्वनिष्ठावच्छेदकतानिरूपकज्ञाननिष्ठावच्छेदकतानिरूपकाधेयत्वनि-
ष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकीभूता याऽवच्छे-
दकतात्वावच्छिन्ना प्रतियोगिता तन्निरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितेत्यादिनिरूपकत्वनिष्ठा-
वच्छेदकतानिरूपिता याऽधेयत्वसंबन्धावच्छिन्नाऽवच्छेदकता तन्निरूपकनिरूपकत्वनिष्ठाऽवच्छेदकतानि-
रूपकनिरूपितत्वनिष्ठाऽवच्छेदकतानिरूपककारणत्वनिष्ठावच्छेदकतानिरूपकज्ञाननिष्ठावच्छेदकतानि-

---

दृशविधेयताद्वयानिरूपकत्वेन तादृशानुमितिनिष्ठकार्यतामादाय घटाभाववद्वृत्तिद्रव्येऽतिव्याप्तेः समूहालम्बनानुमिति-
घटितलक्षणे विधेयताद्वयाऽनिरूपकत्वस्यानिवेशनीयत्वाच्चेति ध्येयम् ।



रूपकवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूप-
कावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रातिबध्यतेति । उभयावृत्तित्वं न स्वप्रतियोगिवृत्तित्व-
स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वं तादृशसंबन्धास्वीकारात् । परं त्वेकत्ववदन्यावृत्ति-
त्वं तच्चाप्रसिद्धमेकत्ववदन्याप्रसिद्धेः अत एकत्वादिव्यक्तेः स्वरूपतोभानमतमवलम्ब्य तद्व्यक्तिनिष्ठ-
निरवच्छिन्नावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपक-
भेदनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकवृ-

त्तित्वत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं तथाच न पूर्वोक्तदोष इति वाच्यम् । तथापि धूमव्याप्यवान्

---

१ ननु धूमव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैकरूपेण कारणत्वेपि तत्तज्ज्ञानधर्मिकाऽप्रामाण्यज्ञानानामननुगमान्नैकरूपावच्छिन्नत्वप्रयुक्तकारणताया ऐक्यमिति । नच धूमव्याप्याभाववति व्याप्यप्रकारताकमित्याद्यप्रामाण्यज्ञानाभावकूटविशिष्टनिश्चयत्वेन कारणत्वमिति वाच्यम् । तथा सति प्रथमतो भाविज्ञानं धूमव्याप्यालोकाभाववत्यालोकप्रकारताकमित्येतदप्रामाण्यज्ञानसत्त्वे धूमव्याप्यवह्निमानित्याकारकपरामर्शानन्तरं धूमवानित्यनुमितिर्न स्यात्तत्र तादृशाप्रामाण्यज्ञानाभावकूटान्तर्गतानिरुक्ताप्रामाण्यज्ञानाभावस्यासत्त्वात्तस्याप्यालोकावगाहिपरामर्शनिष्ठैकरूपावच्छिन्नजनकतायामुत्तेजकत्वादिति चेदत्रास्मद्गुरुचरणाः निश्चय-

विशिष्टनिश्चयीयनिरुक्तरूपावच्छिन्नविषयतावत्त्वेन कारणत्वस्य निर्दुष्टत्वात् निश्चये निश्चयवैशिष्ट्यंच स्वतादात्म्यस्वाभाववत्त्वोभयसम्बन्धेन अभावप्रतियोगितावच्छेदकसम्बन्धश्च स्वीयप्रकारतावच्छेदकरूपसम्बन्धनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकविशेष्यत्वनिष्ठावच्छेदकतानिरूपकप्रकारत्वनिष्ठावच्छेदकतानिरूपकप्रकारित्वनिष्ठप्रकारता तन्निरूपितविशेष्यत्वरूपः तथाच यज्ज्ञानधर्मिकाऽप्रामाण्यज्ञानं भवितव्यं तज्ज्ञानीयप्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावाधिकरणनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारित्वनिष्ठप्रकारताया एव सम्बन्धघटकत्वात्सर्वं समञ्जसम् ।



धूमव्याप्यवह्निमांस्तादृशालोकवानित्यादिज्ञानानामेकरूपेण कारणत्वे धूमाभाववद्वृत्तिर्वह्निरिति व्यभिचारनिश्चयप्रतिबध्यताया धूमव्याप्यवह्निमांस्तादृशघटवांस्तादृशपटवानित्यादिसमूहालम्बनज्ञानेषु तादृशकार्य्यतावत्सु असत्त्वेन व्यभिचारेऽव्याप्त्यापत्तेरिति दिक् ॥ श्रीः ॥



बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिष्वव्याप्तिवारणाय
प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षनिवेश इति ॥



नन्वत्र प्रकृतपक्षविषयकत्वानिवेशेऽसाधारणस्याप्यसंग्रहात् कथं तदनभिधानमिति चेन्न । पक्षविषयकत्वानिवेशेपि तत्राव्याप्तिविरहात् । तथाहि प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयकत्वे सति प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुविषयकानुमितित्वव्यापकत्वं प्रतिबध्यतायां लक्षणे निविष्टं तच्च यदि स्वरूपसंबन्धेन तदाऽसाधारण्यासंग्रहः । पर्वतो वह्निमान्घटो वह्निमान्पटो वह्निमानित्यनुमितिषु पक्षे हेतुमत्ताज्ञानाकालीनासाधारण्यविषयकनिश्चयप्रतिबध्यत्वाभावात् । किंतु स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसंबन्धेन व्यापकत्वं विवक्षणीयम् । तथाचासाधारण्यविषयकनिश्चयप्रतिबध्यतायाः स्वनिरूपितप्रतिबन्धकतावच्छेदकपक्षधर्म्मिकहेतुमत्ताज्ञानकालीनज्ञानीयासाधारण्यविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः पर्वतघटादिधर्म्मिकवह्न्यनुमिति-

षु सर्वत्र विद्यमानत्वात् वह्न्यभाववद्ध्रदादिरूपबाधादिनिश्चयप्रतिबध्यताया घटो वह्निमानित्या-
द्यनुमितिषूक्तसंबन्धेनासत्त्वाद्बाधाद्यसंग्रहः । नच पर्वतो वह्निमान्धूमादित्यत्र वह्निव्यापकीभूताभावप्रति-
योगित्वेऽतिव्याप्तिः । वह्निव्यापकीभूताभावनिरूपितत्वाभाववत्प्रतियोगित्वमित्याकारकबुद्धित्वावच्छिन्ना
या प्रतिबध्यता तस्याः स्वनिरूपितप्रतिबन्धकतावच्छेदकीभूता वह्निव्यापकीभूताभावप्रतियोगी धूम
इति ज्ञानीया वह्निव्यापकीभूताभावप्रतियोगित्वविषयता तदवच्छिन्ना या घटो धूमवान्पटो धूमवानित्या-
दिज्ञानकालीनवह्निव्यापकीभूताभावप्रतियोगी धूम इति निश्चयनिष्ठा प्रतिबन्धकता तन्निरूपितप्रतिबध्य-
ताया घटो वह्निमान्पटो वह्निमानिति नानाविधामितिषु सत्त्वेन निरुक्तप्रतिबध्यताया उक्तप्र-

तिबध्यतावत्त्वरूपपरम्परासम्बन्धेनोक्तसमूहालम्बनानुमितित्वव्यापकत्वात् इति वाच्यम् । स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयतानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभाववदवच्छेदकतानिरूपकप्रतिबन्धकतानिरूपकप्रतिबध्यतायाः सम्बन्धत्वस्वीकारात् । एवं सति वह्निव्यापकीभूताभावनिरूपितत्वाभाववत्प्रतियोगित्वमिति बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायामवच्छेदकीभूता या वह्निव्यापकीभूताभावनिरूपितप्रतियोगित्वमिति निश्चयीया तादृशप्रतियोगित्वविषयता तत्र वह्निव्यापकीभूताभावप्रतियोगी धूम इति निश्चयीयधूमत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकतादृशप्रतियोगिताविषयतायां वर्तमाना या वह्निमत्ताबुद्धिप्रतिबन्धकतावच्छेदकता तद्भे-

दस्य सत्त्वात् तादृशविषयतात्वव्यापकावच्छेदकताकप्रतिबन्धकतानिरूपकप्रतिबध्यतायाः पर्वतो वह्निमानित्याद्यनुमितावसत्त्वेनातिव्याप्तिविरहात् । असाधारण्यनिश्चयप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितासामान्यस्य घटपटादिपक्षकानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतया तत्संग्रहः । नच ह्रदो वह्निमान् जलादित्यादौ जलाभाववान्वह्निमान् ह्रदो वह्निव्याप्यजलवानित्यनुमितेरपि लक्षणघटकतया तत्रचासाधारण्यनिश्चयप्रतिबध्यत्त्वं नास्ति तत्र पक्षतावच्छेदकावच्छिन्ने हेतुमत्ताज्ञानस्याहार्यतया तत्कालीनासाधारण्यनिश्चयस्याप्रतिबन्धकत्वात्कथमसाधारण्यसंग्रह इति वाच्यम् । किंचिद्धर्मविशिष्टानुमितित्वव्यापकत्वस्य प्रतिबध्यतायां विवक्षणीयत्वात् वैशिष्ट्यंच स्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारतावत्त्वस्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारतावत्त्वोभयसम्बन्धेन तथा च जलाभाववान् वह्निमान् ह्रदो वह्निव्याप्यजलवानित्यनुमितिश्च न तादृशी पटो वह्निमान् घटो वह्निमानित्यनुमितिश्च तादृशी तत्रचासाधारण्यनिश्चयप्रतिबध्यतायाः सत्त्वात्तत्संग्रहः । एतादृशपरम्परायास्सम्बन्धत्वानङ्गीकारेतु तादृशप्रतिबध्यतायाः प्रकारमुद्रया निवेशोपि सुलभः तथाहि यत्किंचित्प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतासामान्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावान्नेति प्रतीतिसिद्धो यः प्रकृतानुमितिनिष्ठो भेदस्तन्निरूपिताधिकरणनिष्ठप्रतियोगितानिरूपितप्रतिबध्यत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितप्रतिबन्धकत्वनिष्ठावच्छेदकतानिरूपितनिरू-

पकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताव-
च्छेदकत्वनिष्ठप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकतानिरूपितविषयतानिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठा-
वच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतिबन्धकत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितनिरूपित-
त्वनिष्ठाऽच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतिबध्यतानिष्ठप्रतियोगितासम्बन्धावच्छिन्नाऽवच्छेदकता-
निष्ठावच्छेदकतानिरूपिताधेयतासम्बन्धावच्छिन्नावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभाववत्प्रतिबध्यता-

या लक्षणे निवेश इति। अत्रोभयत्राभावोऽधिकन्यूनवारकपर्याप्तिघटितो बोध्यः किंच पक्षविषयकत्वानिवेशे-
ऽसाधारण्येऽव्याप्तिशङ्कैव नावतरति यद्रूपावच्छिन्नविषयताशालिनिश्चयसामान्ये प्रकृतानुमित्यप्रतिबन्धक-
त्वासाधारण्याविषयकत्वोभयाभाव इति लक्षणस्य सव्यभिचारे विवक्षणीयत्वात् इति दिक् ॥ श्रीः ॥

साध्याप्रसिद्ध्यव्याप्तिवारणप्रयोजनकत्वं तदुपादानस्येतितु न सत् व-
ह्निर्न काञ्चनमय इति निर्णयस्य शुद्धवह्नित्वादिना वह्न्याद्यनुमित्यविरो-
धित्वेपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वादिति।

नन्वत्र प्रत्येकदलखण्डनस्य ग्रन्थकारतात्पर्य्यविषयत्वे पक्षतावच्छेदकव्यावृत्तिकाले बाधस्वरूपासिद्ध्योरव्याप्तिदानमसङ्गतं दलद्वयनिवेशखण्डनपरत्वे साध्याप्रसिद्धयव्याप्तिवारणंतु न सदिति खण्डनमयुक्तमिति चेन्न। पक्षतावच्छेदकस्य सकृत् निवेशाभिप्रायेणाव्याप्त्यभिधानात्। तन्निवेशस्तु पक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादिरीत्या वैशिष्ट्यंच स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वस्वावच्छिन्नविशेष्यतानिरूपितसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभयसंबन्धेन। नचैवंरीत्या साध्यतावच्छेदकस्यापि सकृन्निवेशसंभवेन तन्निवेशस्य साध्याप्रसिद्धयव्याप्तिवारकत्वं युक्तमेव तादृशरीतिस्तु स्वविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादिरूपा वैशिष्ट्यंच स्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वहेतुव्यापकत्वविषयतानिरूपितस्वावच्छिन्नविषयतानिरूपिताधिकरणत्वविषयतानिरूपितधर्मिविषयतानिरूपितवृत्तित्वविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षविशेष्यताकत्वस्वावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपितव्यापकत्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयताकत्वस्वविशिष्टहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताकत्वैतच्चतुष्टयसम्बन्धेन स्ववैशिष्ट्यंच स्वावच्छिन्नप्रकारतानिरूपिताधिकरणत्वविषयतानिरूपितधर्म्मिविषयतानिरूपितवृत्तित्वविषयतानिरूपितत्वस्वावच्छिन्नप्रकारतानिरूपिताधिकरणत्वविषय-

तानिरूपितधर्म्मिविषयतानिरूपितभेदविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरू-
पिताभावविषयतानिरूपितत्वोभयसंबन्धेनेति वाच्यम्। परम्परायास्संबन्धत्वानङ्गीकारात्। नच तथासति
पक्षतावच्छेदकस्यापि सक्रान्निवेशो न संभवतीति वाच्यम्। अस्मन्मते पक्षतावच्छेदकस्य प्रकारविध-
या सक्रान्निवेशसंभवात्। तथाहि पक्षतावच्छेदकनिष्ठावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकताभिन्ना सती वि-
शेष्यतात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यतानिष्ठाऽवच्छेदकताभिन्ना स-
ती साध्यतावच्छेदकावच्छिन्नप्रकारतात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकतादृश-
प्रकारतानिष्ठावच्छेदकताभिन्ना सती साध्यव्याप्यहेतुनिष्ठप्रकारतानिष्ठाऽवच्छेदकताभिन्ना सती अनु-

मितित्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकानुमितिनिष्ठावच्छेदकताभिन्ना सती आ-
धेयतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकाऽऽधेयत्वनिष्ठाऽवच्छेदकताभिन्ना सती भे-
दत्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकभेदनिष्ठाऽवच्छेदकताभिन्ना सती प्रतियोगि-
तात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगित्वनिष्ठाऽवच्छेदकताभिन्ना सती
अवच्छेदकतात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगितानिरूपितप्रतियोगि-
त्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठाऽवच्छेदकतानिरूपितवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपितानुमितिनि-
ष्ठाऽवच्छेदकतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठाऽवच्छेदकतानिरूपितविशेष्यत्वनिष्ठाऽव-

च्छेदकतानिरूपिता याऽवच्छिन्नत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तद्भिन्ना सती विशेष्यतात्वनिष्ठाऽव-च्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यतात्वावच्छिन्नावच्छेदकताभिन्ना सती साध्यव्याप्य-हेतुप्रकारतात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकविशेष्यतानिष्ठावच्छेदकतानिरूपक-तादृशहेतुप्रकारतानिष्ठाऽवच्छेदकतानिरूपकानुमितिनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठाऽवच्छेदकता-निरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठाऽवच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रति-योगिताकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानाविषयत्वमिति तन्मते साध्यता-वच्छेदकं सकृन्निवेश्यैवं रीत्या प्रकाराविधया निवेशासम्भवाद्भट्टाचार्योक्तं दूषणं दुरपह्नवमिति ॥ श्रीः ॥



तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्र-कारतायास्तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रका-रतात्वेनानुगमय्य निवेशो न संभवतीति ( गादाधरी ) ॥

नन्वत्रैवमनुगमाऽसंभवेपि तत्तद्व्याप्त्यवगाहितां स्वातन्त्र्येणाऽनिवेश्य प्रकारान्तरेणानुगमः संभवति त-थाहि प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नकार्य्यताविशिष्टा या प्रतिबध्यता तन्नि-रूपितप्रतिबन्धकतेत्यादि लक्षणम् तादृशकार्य्यतावैशिष्ट्यंच साध्यतावच्छेदकावच्छिन्नप्रकारतानिरू-

सा०नि० पितपक्षतावच्छेदकावच्छिन्नविशेष्यताविशिष्टस्वनिरूपितकारणतावच्छेदकप्रकारतानिरूपितपक्षतावच्छे- विवेचना.
॥ २६ ॥ दकावच्छिन्नविशेष्यताशाल्यनुमितित्वव्यापकत्वसंबन्धेन तथाच अन्वयव्याप्तिविशिष्टहेतुविषयकपराम-
र्शनिरूपिततादृशानुमितित्वघटितधर्म्मावच्छिन्नकार्य्यताविशिष्टा प्रतिबध्यता तादृशव्याप्त्यवगाहिसमू-
हालम्बनानुमितिनिष्ठप्रतिबध्यतैव एवं व्यतिरेकव्याप्तिविशिष्टहेतुविषयकपरामर्शनिरूपिततादृशानुमिति-
त्वघटितधर्म्मावच्छिन्नकार्य्यताविशिष्टप्रतिबध्यताच तादृशव्याप्त्यवगाहिसमूहालम्बनानुमितिनिष्ठैवेति न
कुत्राप्यव्याप्तिः । नच साध्याभाववद्वृत्तित्वरूपव्याप्त्यवगाहिपरामर्शस्य व्याप्त्यंशे निर्द्धर्म्मितावच्छे- ॥ २६ ॥
दककज्ञानसाधारण्याय हेतुतावच्छेदकमानिवेश्यैकरूपेण कारणत्वमते तादृशसकलहेतुतावच्छेदकावगा-

हिपरामर्शनिरूपितकार्य्यताया ऐक्यात्तादृशकार्य्यताया धूमव्याप्यवह्न्यालोकाद्यवगाहिसमूहालम्बनानु-
मितिषु सत्त्वात् तत्र सर्वत्र धूमाभाववद्वृत्तिवह्न्यादिविषयकनिश्चयप्रतिबध्यताया अभावेन तादृशव्यभि-
चारे सर्वत्राव्याप्तिरिति वाच्यम् । स्वनिरूपितकारणतानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्य-
तानिष्ठाऽवच्छेदकतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नप्रकारतानिष्ठाऽवच्छेदकतानिरूपितावच्छिन्नत्व-
संबन्धावच्छिन्नविशेष्यत्वनिष्ठाऽवच्छेदकतानिरूपितानिरूपितत्वसंबन्धावच्छिन्नाऽवच्छेदकताश्रयप्रकार-
तावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नप्रकारतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वाव-

---

१ अत्र विशेष्यतायां हेतुतावच्छेदकावच्छिन्नत्वमनिवेश्य प्रकारतायां तन्निवेशे पर्वतो वह्निमान् काञ्चनमयधूमा-

दित्यादौ हेत्वसिद्धावव्याप्तिस्तत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितावपि काञ्चनमयत्वावगाहिपरामर्शनिरूपितकार्यताया निरुक्तसम्बन्धेन सत्त्वात् विशेष्यतायां तन्निवेशे पर्याप्तिनिवेशान्नाव्याप्तिः । तत्प्रकारश्च प्रकृतहेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यतात्वावच्छिन्नेत्यादि तादृशधर्मवृत्तित्वंच स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच काञ्चनमयत्वानवगाहिसमूहालम्बनानुमितिनिरूपितपक्षविशेषणतापन्नहेतुविशेष्यताच तादृशकाञ्चनमयत्वधूमत्वगतद्वित्वरूपधर्मवृत्तिः प्रकारतावच्छेदकतापर्याप्तिस्तु न निवेशयितुं शक्यते पक्षविशेष्यतानिरूपितहेतुप्रकारतायां हेतुतावच्छेदकव्याप्त्योरेवावच्छेदकत्वात् । न्यूनवारकपर्याप्तिनिवेशे पर्वतो महानसीयवह्निमान् धूमादित्यत्र व्यभिचारिण्यव्याप्तिः तत्र परामर्शनिरूपितकार्य्यतायाः



च्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्ना या विशेष्यता तच्छाल्यनुमितित्वव्यापकत्वस्य संबन्धत्वात् तथाच धूमवान्वह्नेरित्यादौ पर्वतो धूमवान् धूमव्याप्यवह्निमानित्यनुमितावेव तादृशकार्य्यताविशिष्टानुमितित्वसत्त्वात् तत्रच तादृशव्यभिचारनिश्चयप्रतिबध्यत्वस्य सत्त्वान्नोक्ताव्याप्त्यवकाशः । नचैवमपि साधारणग्रन्थे साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्योभयाभाववद्धेतोरपि व्यभिचारत्वाभि-

---

पर्वतो महानसीयवह्निमान् तादृशवह्निव्याप्यमहानसीयधूमवानित्यनुमितावपि सत्त्वात् तत्र महानसीयवह्न्यभाववद्वृत्तिधूम इति व्यभिचारनिश्चयप्रतिबन्धकत्वाभावात् ।

धानात्तत्राव्याप्तिः तत्रहि साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्यवद्धेतुमान्पक्ष इत्याकारकतादृशव्यभि-
चारनिश्चयप्रतिबध्यपरामर्शनिरूपितकार्यतानिरूपितकारणतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकानि-
रूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतायाः साध्याभाववदवृ-
त्तित्वत्वावच्छिन्नप्रकारतायां सत्त्वात्तदवच्छेदकतापर्य्याप्त्यधिकरणतादृशावृत्तित्वत्वावच्छिन्नप्रकारतानि-
रूपितप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्य-
ताशाल्यनुमितित्वस्य पर्वतो धूमवान्धूमाभाववदवृत्तिवह्निमानित्यनुमितावपि सत्त्वेन तत्र धूमा-
भाववदवृत्तित्वधूमसामानाधिकरण्योभयाभाववान् वह्निरिति व्यभिचारनिश्चयप्रतिबध्यत्वस्यासत्त्वादि-

ति वाच्यम् । स्वनिरूपितकारणतानिरूपितमुख्यविशेष्यतानिष्ठाऽवच्छेदकतानिरूपितावच्छेदकता-
निरूपितावच्छेदकतानिरूपिता या प्रकारतानिष्ठानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरू-
पितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकीभूतो यो धर्म्मस्तद्वृत्तिहेतुतावच्छे-
दकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशाल्यनुमितित्वव्यापकत्वस्य सम्बन्धत्व-
स्वीकारात् । धर्म्मवृत्तित्वंच स्वनिष्ठनिरूप्यतानिरूपितप्रकारतात्वघटितधर्म्मावच्छिन्ननिरूपकताव-
च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच पर्वतो धूमवान्धूमा-
भाववदवृत्तिवह्निमानित्यनुमितावेशादृशसम्बन्धेन तादृशकार्य्यता नास्त्येव धूमाभाववदवृत्तित्वधूमसामा-

सा० नि०
॥ २९ ॥

नाधिकरण्यवद्वह्निमान्पर्वत इति परामर्शनिरूपितकार्य्यतानिरूपितकारणतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितविशेष्यतानिष्ठाऽवच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगिताऽवच्छेदकत्वस्याऽभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वताद्दशप्रकारतात्वाधेयतात्वावच्छिन्नविशेष्यतावच्छिन्नत्वताद्दशप्रकारतात्वैतद्गतसमुदायत्वे सत्त्वेन तत्रच धूमाभाववदवृत्तिवह्निमानित्यनुमितीयहेतुतावच्छेदकावच्छिन्नविशेष्यताया निरुक्तसम्बन्धेनाभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वताद्दशप्रकारतात्वगतद्वित्ववृत्तेरसत्त्वेन पर्वतो धूमवान्धूमाभाववदवृत्तित्वधूमसामानाधिकरण्यवद्वह्निमानित्यनुमितीयविशेष्यताया एव ताद्दश्यास्तत्र सत्त्वेनाव्याप्तिवि-

विवेचना.

॥ २९ ॥

रहात्। तादृशपरम्परायाः संसर्गत्वानङ्गीकारे प्रकारमुद्रयैव निवेशस्तत्प्रकारश्च प्रकृतपक्षसाध्यहेतुका-
नुमितित्वावच्छिन्नकार्य्यतात्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपककार्य्य-
तानिष्ठाऽवच्छेदकतानिरूपककारणतानिष्ठावच्छेदकतानिरूपकमुख्यविशेष्यतानिष्ठाऽवच्छेदकतानिष्ठाव-
च्छेदकतानिरूपकप्रकारतानिष्ठाऽवच्छेदकतानिष्ठाऽवच्छेदकतानिरूपकविशेष्यतानिष्ठाऽवच्छेदकतानि-
ष्ठाऽवच्छेदकतानिरूपकप्रकारतानिष्ठाऽवच्छेदकतानिष्ठावच्छेदकतानिरूपिका सती अवच्छेदकतात्व-
निष्ठाऽवच्छेदकतानिरूपिका या प्रतियोगिता तन्निरूपकपर्य्याप्त्यनुयोगितावच्छेदकतावद्धर्म्मनि-
ष्ठावच्छेदकतानिरूपकानुयोगितानिरूपकपर्य्याप्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपि-

तनिरूपकत्वनिष्ठाऽवच्छेदकतानिरूपितनिरूपितत्वनिष्ठाऽवच्छेदकतानिरूपितनिरूप्यत्वनिष्ठावच्छेदक-
तानिरूपिताऽधेयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयप्रकृतहेतुतावच्छेदकाऽवच्छिन्नविशेष्यत्वाऽवच्छिन्न-
प्रकारतानिरूपिता या प्रकृतपक्षताऽवच्छेदकाऽवच्छिन्ना विशेष्यता प्रकृतसाध्यतावच्छेदकावच्छिन्नप्र-
कारतानिरूपितप्रकृतपक्षतावच्छेदकाऽवच्छिन्नविशेष्यताविशिष्टतद्वदनुमितिनिष्ठभेदप्रतियोगितावच्छेद-
कत्वं नास्तीति सिद्धाभावः प्रतिबध्यतायां विशेषणमितीति चेन्न। साध्याभाववद्वृत्तित्वरूपव्याप्त्यवगा-
हिनानालिङ्गपरामर्शानां हेतुतावच्छेदकमनिवेश्यैकरूपेणाकारणत्वमतेऽप्रामाण्यज्ञानानामनुगतरूपेणोत्ते-

जकतया पक्षसाध्यादिविषयतानां कार्य्यतावच्छेदकत्वानावश्यकतयाऽसम्भवापत्तेरिति दिक् ॥ श्रीः ॥

यथाश्रुतार्थपरतानिर्वाहाय लिङ्गोपधानमतमेवाश्रयत इत्यादि ॥

नन्वत्र प्रथमकल्पपरित्यागे लक्षणारूपदोष एव बिजमिति तदभिप्रायो ज्ञायते सच न सम्भवति तादृश-कार्य्यतानिरूपकसम्बन्धिग्रहनिष्ठप्रातिबध्यतानिवेशेऽतिव्याप्तेर्ग्रहत्वव्यापकप्रतिबध्यतानिवेशेऽव्याप्तेस्तद-वच्छिन्नप्रातिबध्यतानिवेशेऽसम्भवस्य चाथेत्यादिना भट्टाचार्य्योक्तस्य जागरूकत्वादिति चेन्न । प्रकृतपक्ष-साध्यहेतुकानुमितिकार्य्यताप्रतियोगिकयत्किंचित्सम्बन्धवद्ग्रहत्वव्यापकप्रतिबध्यताया एव लक्षणे निवेश-

नीयतया व्यापकत्वपक्षे भट्टाचार्य्योक्तबाधव्यभिचाराद्यव्याप्त्यभावात् तादृशकार्य्यत्वप्रतियोगिकाश्रयत्व-



१ जनकतावदन्यप्रकृतपक्षसाध्यकानुमितिनिष्ठायाः प्रकृतहेतुमत्तानिश्चयाव्यवहितोत्तरत्वावच्छिन्नायाः कार्य्यतायास्त-द्व्यक्तित्वेन प्रवेशात् तद्दोषप्रसङ्गः । जनकतावत्त्वंच स्वनिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताक कार्यतावत्त्वस्वाभाववद्वृत्तिकारणतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताककार्यतावत्त्वोभयसम्बन्धेन लिङ्गोपधानमते वह्निव्याप्यघटत्ववान् ह्रदो वह्निमान् इत्याद्यनुमितिंप्रति घटो वह्न्यभाववान् इत्यादिज्ञानस्य प्रतिबन्धकत्वं सामानाधिकरण्येन तदवत्ताज्ञानंप्रति अवच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य प्रतिबन्धकत्वादतो ह्रदो वह्निमान् घटत्वादित्यादौ वह्न्यभाववद्घटेतिव्याप्तिः । हेतुसमानाधिकरणसाध्याभावस्यापि व्यभिचारत्वेन लक्ष्यत्वेतु व-



रूपसंबन्धवद्ग्रहत्वव्यापकत्वस्यानुमितिविरोधिदोषप्रतिबध्यतायां तादृशकार्य्यत्वप्रतियोगिकनिरूपकत्व-रूपसंबन्धवद्ग्रहत्वव्यापकत्वस्य परामर्शविरोधिदोषप्रतिबध्यतायांच सर्वत्र सत्त्वात् । नचैवं सति भट्टाचार्य्यमते प्रकारान्तरानुसरणे किं बीजमिति वाच्यम् । साध्याभाववदवृत्तिहेतुमत्ताज्ञानस्य हेतुतावच्छेदकविषयतामनिवेश्यैकरूपेण कारणतामवलम्ब्य भट्टाचार्य्यैर्णैतल्लक्षणकरणात । तथा सति तादृशका-

ह्न्यभावव्याप्यघटेऽतिव्याप्तिर्दुर्वारा तदभावव्याप्यवत्ताज्ञानस्य बाधज्ञानसमानयोगक्षेमसाधारणत्वात् अत्रवदन्ति-कल्पीयविशिष्टान्तराघटितत्वाभावादेव नातिव्याप्तिः तदभावश्च शुद्धपक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणत्वाप्रयोजकत्वात् ।

र्य्यताप्रतियोगिकनिरूपकत्वरूपसंबन्धस्य वह्नीन्धनादिहेतुविषयकपरामर्शेषु सत्त्वेन तत्रच सर्वत्र वह्नि-
धूमव्यभिचारीति व्यभिचारनिर्णयप्रतिबध्यत्वाभावेन तादृशव्यभिचारेऽव्याप्त्यापत्तेः। केचित्तुकारेणतु
व्याप्तिज्ञानानां पृथक्कारणतामतस्यैवावलम्बनात्तत्रच तादृशकार्य्यत्वप्रतियोगिकोक्तान्यतरात्मकयत्कि-
चित्संबन्धविशिष्टग्रहत्वस्य तादृशनानाविधपरामर्शेष्वसत्त्वेन तथानिवेशेऽव्याप्तिविरहात्। नचैवं सति
प्रकृतपक्षादिविषयकानुमितित्वावच्छिन्नकार्य्यतानिवेशे ऽप्रामाण्यज्ञानानामेकरूपेणोत्तेजकत्वमतेऽसंभव-
स्तादृशानुमितित्वव्यापकपरामर्शनिरूपितकार्य्यतात्वप्रसिद्धैव अनुमितिनिष्ठकार्य्यतानिवेशे पर्वतो व-
ह्निमान्हृदश्च तथेत्याकारकानुमितिनिष्ठहृदविषयकपरामर्शकार्य्यतामादाय पर्वतो वह्निमानित्यादौ वह्न्य-

भाववद्ध्रदादावतिव्याप्तिरिति वाच्यम् । कार्य्यतायामनुमितिनिष्ठत्वस्यैव निवेशात् । उक्तातिव्याप्तिस्तु अनुमितौ विधेयताद्वयानिरूपकत्वविशेषणेन वारणीया । नच वह्निव्याप्यधूमवान् घटव्याप्यपटवांश्च पर्वत इति परामर्शानन्तरं घटानुमितिप्रतिबन्धकसत्त्वे पर्वतो वह्निमानित्यनुमितेरेवोदयात् विधेयताद्वया-निरूपकतन्निष्ठघटव्याप्यविषयकपरामर्शोत्तरत्वाऽवच्छिन्नकार्य्यताप्रतियोगिकनिरूपकत्वरूपसंबन्धविशि-ष्टघटव्याप्यविषयकपरामर्शनिष्ठप्रतिबध्यतामादाय पर्वतो वह्निमान्धूमादित्यादौ घटाभाववद्वृत्तिपटेऽति-व्याप्तिरिति वाच्यम् । अव्यवहितोत्तरत्वावच्छिन्नकार्य्यतानिरूपितज्ञाननिष्ठकारणताविशिष्टान्यत्वेनानु-मितेर्विशेषणीयत्वात् । कारणतावैशिष्ट्यंच स्वनिरूपितकार्य्यतावत्त्वस्वाभाववज्ज्ञाननिष्ठकारणतानिरू-

सा०नि० पिताव्यवहितोत्तरत्वावच्छिन्नकार्य्यतावत्त्वोभयसंबन्धेन तथाच तादृशानुमितौ परामर्शद्वयनिष्ठकारण- विवेचना.
॥ ३३ ॥ तानिरूपितकार्य्यतासत्त्वात्तद्व्यावृत्तिः । कारणतायामव्यवहितोत्तरत्वावच्छिन्नकार्य्यतानिरूपितत्वविशे-
षणादीश्वरज्ञाननिष्ठकारणतामादाय न तादृशानुमित्यप्रसिद्धिः ज्ञाननिष्ठत्वविशेषणात्सिद्धिविशिष्टानु-
मितिं प्रतीच्छायाः कारणत्वमते इच्छादिकारणत्वमादाय न तादृशानुमित्यप्रसिद्धिः वैशिष्ट्यघटक-
प्रथमसम्बन्धनिवेशेनोदासीनानुमितिनिरूपितोदासीनपरामर्शनिष्ठकारणतामादाय नाप्रसिद्धिः द्वितीयस-
म्बन्धनिवेशात्परामर्शकारणतामादाय नाप्रसिद्धिः तादृशद्वितीयसम्बन्धघटककारणतायां ज्ञाननिष्ठत्ववि- ॥ ३३ ॥
शेषणात्प्रागुक्तरीत्येच्छादिकारणतामादाय नाप्रसिद्धिः कार्य्यतायामव्यवहितोत्तरत्वावच्छिन्नत्वानिवेशाद्वि-

शेषणज्ञानकार्य्यतामादाय नाप्रसिद्धिः । नच तथापि पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभाववद्वृत्तिद्र-
व्येतिव्याप्तिः प्रकृतहेत्वंशे व्याप्त्यनवगाहिप्रकृतहेतुविषयकवह्निव्याप्यद्रव्यवान्पर्वत इति परामर्शोत्त-
रानुमितौ प्रकृतपक्षसाध्यहेतुकायां तादृशकारणताविशिष्टान्यत्वस्य सत्त्वात्तन्निष्ठकार्य्यत्वप्रतियोगि-
कनिरूपकत्ववत्तादृशपरामर्शत्वव्यापकप्रतिबध्यत्वस्यापि ग्रहणसम्भवादिति वाच्यम् । कारणताव-
दन्यप्रकृतपक्षसाध्यकानुमितिनिष्ठप्रकृतहेतुमत्तानिश्चयाव्यवहितोत्तरत्वावच्छिन्नकार्य्यतात्वेन तादृशका-
र्य्यताया लक्षणे निवेशनीयत्वात् । इदमत्र चिन्तनीयम् । एवंरीत्या पूर्वोक्तदूषणोद्धारेण पूर्वोक्तरीत्या

नानाविधव्याप्तिप्रकारताः प्रातिस्विकरूपेणानिवेश्यानुगमसम्भवेनोक्तपक्षसाध्यहेतुकानुमितित्वावच्छिन्न-
कार्य्यत्वाप्रसिद्ध्याऽसम्भवाभिधानमनुचितामिति ॥ श्रीः ॥

अव्यवहितोत्तरत्वसंबन्धेन तद्धर्म्मावच्छिन्नधर्म्मिकव्यभि-
चारज्ञानविशिष्टं यत्तदन्यत्वं वा कार्य्यतावच्छेदकमिति ॥

नन्वत्र कथं लक्षणशरीरम् यदि प्रकृतपक्षसाध्यहेतुकानुमितित्वव्यापकत्वघटितमेव प्रकृतहेतुकत्वंच प्र-
कृतहेतुतावच्छेदकावच्छिन्नधर्म्मिकव्यभिचारज्ञानविशिष्टान्यत्वं तथाच ताद्दशव्यभिचारज्ञानविशिष्टान्य-

प्रकृतपक्षसाध्यकानुमितित्वव्यापकप्रतिबध्यतेत्यादिलक्षणम् तथाच व्यभिचारे नाव्याप्तिरिति तदा स्वरूपासिद्ध्यसंग्रहः एकरूपेण स्वरूपासिद्धिज्ञानेप्यपररूपेण पक्षधर्म्मताज्ञानादनुमित्युत्पत्त्या स्वरूपासिद्धिनिश्चयप्रतिबध्यतायास्तादृशानुमितित्वाव्यापकत्वात् यदि चैवमेव स्वरूपासिद्धिज्ञानविशिष्टान्यत्वमपि विवक्षितमित्युच्यते तदा साधनाप्रसिद्धिविरोधानुपसंहारित्वादिज्ञानविशिष्टान्यत्वस्य निवेशनीयतया महागौरवमिति चेन्न। प्रकृतपक्षविशेष्यकसाध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यता-

---

१ ननु पक्षतावच्छेदकतापर्याप्तिनिवेशनमावश्यकमन्यथा आश्रयसिद्धावव्याप्तेस्तन्निवेशे काञ्चनमयत्वाभाववत्तद्व्य-

निरूपितप्रतिबन्धकताश्रयनिर्णयविशिष्टान्यप्रकृतपक्षसाध्यकानुमितित्वव्यापकप्रतिबध्यताघटितलक्षणस्य विवक्षितत्वात् इति दिक् ॥ श्रीः ॥



अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रमे-

---

क्तित्ववत्कालीनह्रदपक्षकवह्निसाध्यकतद्व्यक्तित्ववद्धूमकालीनकाञ्चनमयधूमादित्यादावाश्रयासिद्धिसाधनाप्रसिद्ध्योरव्याप्तिः निरुक्तानुमितेस्तदभावावच्छेदकगृहीतधर्मविषयकत्वेनाहार्यत्वादिति चेन्न आहार्यमात्रस्थले प्रतिबन्धकताघटितलक्षणस्य परिष्टत्वात् ।



यत्वाऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वस्य भ्रमो वाच्यः प्रतियोगितांशे साध्यतावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोः साध्याभाववदवृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वादिति ॥

ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिता-

भावविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनि-श्चयत्वेनैव कारणत्वमास्ताम् एवञ्च स्वरूपसम्बन्धावच्छिन्नप्रमेयतात्वावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि न भ्रमानुपपत्तिरिति चेन्न। महानसीयवह्न्यभाववदवृत्तिधूमवान्पर्वत इति परामर्शस्य तादृशरूपाक्रान्ततया ततः पर्वतो वह्निमानित्यनुमित्यापत्तेः। नचं साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासम्ब-

१ ननु निष्कृष्टपर्याप्तिनिवेशेपि वह्निमहानसीयाभाववदवृत्तिधूमवान् पर्वत इति निश्चयस्यापि महानसीयत्ववह्नित्वगतद्वित्वावच्छिन्नानुगिताकपर्याप्तिकावच्छेदकताकप्रकारताकनिश्चयत्वरूपकारणतावच्छेदकाक्रान्तत्वान्महानसीयवह्नि-मानित्यनुमित्यापत्तिरिति चेदत्र श्रीरङ्गदेशिककृपालब्धज्ञानाः मदन्ति पर्वतो महानसीयवह्निमानित्यत्र वह्नित्वनिष्ठावच्छेद-

न्धावच्छिन्नसाध्यतावच्छेदकपर्य्याप्तावच्छेदकताकप्रकारताघटितानिश्चयत्वं कारणतावच्छेदकमिति वाच्य-
म् । महानसीयत्वमुपलक्षणविधयाऽवगाहमानात्तादृशपरामर्शात्पर्वतो वह्निमानित्यनुमित्यनापत्तेः तादृ-
शपरामर्शस्याभावांशे महानसीयत्ववह्नित्वधर्म्मद्वयावच्छिन्नप्रकारताकतया तादृशप्रकारतावच्छेदकतायाः
धर्म्मद्वय एव पर्य्याप्तत्वात्साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस-
म्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताघटितधर्म्मस्य कारणतावच्छेदकत्वे तु महानसीयवह्नि-

कताकविशेष्यतानिरूपितमहानसीयत्वनिष्ठप्रकारताकबुद्धित्वरूपद्वित्वस्यैव स्वाश्रयनिरूपितविलक्षणविषयतासम्बन्धेन सा-
ध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वादिति ।

व्याप्यधूमवान्पर्वत इति परामर्शात्पर्वतो वह्निमानित्यनुमितिवारणाय साध्यतावच्छेदकसंसर्गतावच्छेदकतापर्य्याप्तिर्निवेश्या तथाच महानसीयत्वमुपलक्षणविधयाऽवगाहमानतादृशपरामर्शीयाभावविशेष्यतानिरूपितसाध्यनिष्ठप्रकारतावच्छेदकसम्बन्धीभूतप्रतियोगितानिरूपितावच्छेदकतापर्य्याप्तिः शुद्धवह्नित्व एव अभावप्रतियोगितावच्छेदककुक्षौ उपलक्षणविधया प्रविष्टस्यावच्छेदकत्वाभावात् इति तादृशपरामर्शादनुमित्युपपत्तिरिति दिक् ॥ श्रीः ॥

लाघवात्प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिजनकतयेति ॥ ॥ ३७ ॥

ननु कथं प्रतियोगितासंसर्गकज्ञानस्य हेतुत्वे लाघवं तत्प्रकारकज्ञानस्य तथात्व एव लाघवात् तत्संसर्गकज्ञानस्य तथात्वे साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताघटितपरामर्शत्वेनैव हेतुत्वस्यावश्यकतया साध्यतावच्छेदकस्य द्विधा निवेशेन गौरवात् प्रतियोगिताप्रकारकज्ञानस्य कारणत्वेतु साध्यतावच्छेदकस्य संसर्गकुक्षावनिवेशेन लाघवात् । नच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतात्वेनैव साध्यप्रकारतायाः कारणतावच्छेदककुक्षौ प्रवेशः नतु तादृशप्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वस्यापीति वाच्यम् । अन्यनिष्ठप्रतियोगिताया अन्यस्य सम्बन्धत्वस्वीकारे वह्नित्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेनाभावांशे घटाव-

गाहिनो घटाभाववदवृत्तिधूमवानिति परामर्शाद्वह्निमानित्यनुमित्यापत्तेरिति चेन्न । प्रतियोगिताप्रकारकज्ञानस्य कारणत्वे प्रतियोगितासंसर्गस्य तत्कुक्षिप्रविष्टसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोश्च संसर्गविषयतानां कारणतावच्छेदकशरीरे नीवेशनीयतया गौरवादिति ॥श्रीः॥

स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यतावच्छेदकवत्त्वमेवाभावस्य साध्याभाववदवृत्तित्वरूपव्याप्तिघटकं लाघवादित्यादि तथाच तादृशसम्बन्धावच्छिन्नसाध्य-

तावच्छेदकनिष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यत्वाव-
च्छिन्नप्रकारताघटितनिश्चयत्वेन कारणत्वमिति पर्यवसितम् ॥

ननु महानसीयवह्न्यनुमितितद्व्याप्यपरामर्शयोः कथं कार्य्यकारणभावः यदि महानसीयत्ववह्नित्व-धर्म्मद्वयनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताघटितधर्म्मपुरस्कारेण तदा क्वचिन्महानसी-यवह्निमान्क्वचिद्वाह्निमहानसीयवानिति कथमनुमितिः। नच व्याप्तिघटकसामानाधिकरण्यांशे साध्यस्य ये-न रूपेण परामर्शे भानं तेनैव रूपेणानुमितावपि भानमित्यनुमितिवैलक्षण्यमुपपद्यत इति वाच्यम्।

महानसीयवह्न्यभाववदवृत्तिवह्निमहानसीयसमानाधिकरणधूमवानिति परामर्शादपि वह्निमहानसीयवानित्यनुमित्यापत्तेरिति चेन्न। यत्र परामर्शेऽभावविशेषणतापन्नवह्न्यंशे वह्नित्वं धर्मितावच्छेदकीकृत्य म-



१ ननु महानसीयवह्निमान् वह्निमहानसीयवानित्याद्यनुमितीनां कारणतावच्छेदकानुगमेऽपि वह्निमानित्याद्यनुमितीनां कारणतावच्छेदकाननुगमो दुर्वारएव किंच कारणातावच्छेदकानुगतत्वं नचैतावता सिद्धमिति चेन्न। यद्धर्मविशिष्टविधेयताशाल्यनुमितित्वावच्छिन्नंप्रति तद्धर्मविशिष्टप्रतियोगिताकत्वसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताकनिश्चयत्वेनानुगमात् विधेयतायां यद्धर्मवैशिष्ट्यञ्च स्वावच्छिन्नावच्छेदकतानिरूपितत्वस्वावच्छिन्नत्वैतदुभयस्वावच्छिन्नत्वैतदन्यतरसम्बन्धेन प्रतियोगितायां तद्धर्मवैशिष्ट्यञ्च निरुक्तोभयस्वावच्छिन्नत्वान्यतरसम्बन्धेनेति सुधियो विदांकुर्वन्तु।



हानसीयत्वं भासते तत्र विशिष्टवैशिष्ट्यबोधमर्य्यादया महानसीयत्वस्य वह्नित्वांशे भानात् महानसीयत्वावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितासम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वाऽवच्छिन्नविशेष्यताघटितनिश्चयत्वेन महानसीयवह्निमानित्यनुमितिंप्रति कारणत्वं यत्र परामर्शे महानसीयत्वं धर्म्मितावच्छेदकीकृत्य वह्नित्वं भासते तस्य वह्निमहानसीयाभाववदवृत्तिवह्निमहानसीयसमानाधिकरणधूमवानिति परामर्शस्य वह्नित्वावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितासम्बन्धावच्छिन्नमहानसीयत्वनिष्ठप्रकारतानिरूपिताभावत्वाऽवच्छिन्नविशेष्यताघटितनिश्चयत्वेन वह्निमहानसीयवानित्यनुमितिंप्रति कारणत्वमिति न काप्यनुपपत्तिरिति ॥ श्रीः ॥

स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरू-
पकत्वस्य सर्वांशे प्रमात्वस्य विवक्षणीयतयेति ॥ ॥

अत्र स्वव्याधिकरणप्रकारावच्छिन्नत्वं स्वव्याधिकरणनिष्ठप्रकारतानिरूपकत्वं स्वव्यधिकरणत्वञ्च न स्वानधिकरणवृत्तित्वं घटो द्रव्यमितिज्ञानस्य प्रमात्वानुपपत्तेः किंतु स्वाधिकरणावृत्तित्वं तथाच स्वाधि-करणावृत्तिनिष्ठप्रकारतानिरूपिता यां या विशेष्यता तत्तदनिरूपकत्वमिति पर्य्यवासितम्। नन्वत्र स्वा-



१ अनेन लक्षणशरीरप्रविष्टज्ञाने विषयताविशिष्टविषयताव्यापकत्वं निवेशितं विषयतावैशिष्टयञ्च स्वतादात्म्यस्वाधिक-

धिकरणावृत्तित्वं यदि संबन्धसामान्येन तदा ह्रदो वह्निमानिति ज्ञानस्य प्रमात्वापत्तिस्तज्ज्ञानीयविषयताधिकरणह्रदादौ कालिकादिसंबन्धेन वह्न्यादिरूपप्रकारसत्त्वेन घटो गगनवानित्यादिज्ञानीयविषयताया एव घटादिनिष्ठायाः स्वपदेन धर्त्तव्यत्वात्तदनिरूपकत्वस्योक्तभ्रमे सत्त्वात् । नच स्वाधिकरणनिरूपितप्रकारतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभावो विवक्षणीयस्तथाच तादृशज्ञानीयविषयताधिकरण-

---

रणावृत्तिनिष्ठप्रकारतानिरूपकत्वोभयसम्बन्धेन व्यापकत्वंच निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन तेन वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेन निरूपकतासम्बन्धेन तादृशविषयतासामान्याभावाप्रसिद्धावपि प्रामाण्यवादे भट्टाचार्योक्तरीत्या विषयतानिरूपकत्वस्य अव्याप्यवृत्तित्त्वेपि न क्षतिः ।

सा० नि० ॥ ४१ ॥

ह्रदादिनिरूपितप्रकारतावच्छेदकसंयोगसंबन्धावच्छिन्नवृत्तित्वाभावस्य वह्न्यादौ सत्त्वेन नोक्तज्ञानसंग्रह इति वाच्यम्। गुणः संयोगेन घटवानिति ज्ञानस्य प्रमात्वापत्तेस्तज्ज्ञानीयविषयताश्रयगुणनिरूपितसंयोगसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या तादृशविषयतायाः स्वपदेन धर्तुमशक्यत्वात्। नच प्रकारतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धेन स्वाधिकरणनिरूपितवृत्तित्वस्याभावः प्रकारताश्रयधर्म्मे विवक्षणीयः तथाच संयोगसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धस्य गुणनिरूपितवृत्तित्वस्य व्यधिकरणतया तत्संबन्धावच्छिन्नतादृशविषयताश्रयगुणनिरूपितवृत्तित्वनिष्ठप्रतियोगिताकाभावस्य प्रकारीभूतघटे सत्त्वेन तदसंग्रह इति वाच्यम्। विशेषरूपेण संबन्धत्वस्वीकारे घटत्वप्रतियोगिकसमवायेन पटत्ववान्पट इत्याकारकज्ञानस्य प्रमात्वापत्तेः प्रकारतावच्छेदकसमवायसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धेन तज्ज्ञानीयविषयताश्रयपटनिरूपितवृत्तित्वस्य पटत्वरूपे प्रकारे सत्त्वात्। नच[1] प्रकारतानिरूपितसंसर्गनिष्ठाऽवच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मा- ॥ ४१ ॥

विवेचना.

---

१ ननु प्रकारतात्वेन प्रकारताप्रवेशे समवायेन घटवान् पट इत्याकारकज्ञानीयप्रकारतायाः संग्रहेऽपि संयोगेन घटवान् गुण इत्यादिप्रकारताया विभिन्नसम्बन्धावच्छिन्नायाः संग्रहो दुर्वार एव विभिन्नसम्बन्धावच्छिन्नत्वेन प्रकारतात्वस्य भिन्नत्वादिति चेन्न। प्रकारतात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्ननिरूपितसंसर्गनिष्ठाऽवच्छेदकतत्वादिनिवेशादिति दिक्।

वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकतानिरूपकसंसर्गनिष्ठाऽवच्छेदकतानिरूपकवृत्तित्वीयस्वरूपसंबन्धेन स्वाधिकरणनिरूपितवृत्तित्वाभावो विवक्षणीयः तथाचोक्तज्ञानीयपटत्वनिष्ठप्रकारतानिरूपितसमवायनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकं यद्घटत्वप्रतियोगिकत्वसमवायत्वनिष्ठद्वित्वं तदवच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकघटत्वप्रतियोगिकसमवायनिष्ठाऽवच्छेदकतानिरूपकवृत्तित्वीयस्वरूपसंबन्धस्य तज्ज्ञानीयविषयताश्रयपटनिरूपितवृत्तित्वस्य व्यधिकरणसंबन्धतया तत्संबन्धावच्छिन्नतदभावस्य पटत्वादिरूपप्रकारे सत्त्वान्न तत्संग्रह इति वाच्यम्। गुणीयसंयोगेन घटवान्गुण इति ज्ञानस्य प्रमात्वापत्तेस्तज्ज्ञानीयप्रकारतावच्छेदकता-

त्वाऽवच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकगुणप्रतियोगिकत्वसंयोगत्वनिष्ठद्वित्वावच्छिन्नानुयोगिताकपर्य्या-
प्तिकावच्छेदकतावच्छेदकताकवृत्तित्वाप्रसिद्धया स्वपदेन तादृशज्ञानीयविषयताया धर्तुमशक्यत्वात्
इति चेन्न । स्वनिरूपितप्रकारतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगि-
तावच्छेदकधर्म्मावच्छिन्नानुयोगिताकपर्य्याप्तिकाऽवच्छेदकतानिरूपकावच्छेदकतानिरूपकीयस्वरूपसं-
बन्धेन स्वाश्रयनिरूपितवृत्तित्वाभावस्य विवक्षणीयतया प्रकृते गुणप्रतियोगिकत्वसंयोगत्वनिष्ठतादृशप-
र्य्याप्त्यनुयोगितावच्छेदकीभूतद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकतानिरूपकीभूता या संयोग-
निष्ठसंसर्गविधयावच्छेदकता तन्निरूपकत्वस्य वृत्तित्वेऽप्रसिद्धावपि तज्ज्ञानीयघटत्वावच्छिन्नप्रकारत्वे त-

सा०नि०
॥ ४३ ॥

त्प्रसिद्धेः तादृशप्रकारत्वीयस्वरूपसंबन्धस्य वृत्तित्वव्यधिकरणसंबन्धतयोक्तदोषानवकाशात् । नच त- विवेचना.
द्व्यक्तित्वादिना घटत्वादिज्ञाने विषयितासंबन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिस्त-
ज्ज्ञानीयतज्ज्ञाननिष्ठविषयतानिरूपितप्रकारतानिरूपितसंसर्गनिष्ठाऽवच्छेदकतानिरूपितावच्छेदकतात्वा-
वच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकं यद्विषयितात्वनिष्ठतद्व्यक्तित्वं तदवच्छिन्नानुयोगिताकपर्य्याप्तिका-
वच्छेदकतानिरूपकसंसर्गनिष्ठावच्छेदकतानिरूपकविषयितासंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धेन ता-
दृशज्ञाननिरूपितवृत्तित्वस्य घटत्वादिरूपप्रकारे सत्त्वेन स्वपदेन तादृशविषयताया धर्तुमशक्यत्वा- ॥ ४३ ॥
दिति वाच्यम् । तादृशसंबन्धेन स्वाश्रयनिरूपितानिरवच्छिन्नवृत्तित्वाभाववन्निष्ठनिरवच्छिन्नप्रकारतानिरू-

पितविशेष्यत्वानिरूपकत्वस्य विवक्षितत्वात् । एवंच तादृशज्ञाननिरूपितविषयितासंबन्धावच्छिन्नवृत्ति-
त्वस्य घटत्वे सत्त्वेपि न तद्वृत्तित्त्वं निरवच्छिन्नमतो नोक्तदोषः । प्रकारतायां निरवच्छिन्नत्वविशेषणात् घ-
टत्वत्वेन घटत्वावगाहिज्ञाने विषयितासंबन्धेन घटत्वत्वेन घटत्वप्रकारकज्ञानस्य नासंग्रहः । नचैवं सति ह्रदो
वह्निमानित्याकारकज्ञानस्य प्रमात्वापत्तिस्तज्ज्ञानीयवह्निनिष्ठप्रकारताया निरवच्छिन्नत्वाभावादिति वा-
च्यम् । स्वाश्रयनिरूपितवृत्तितानवच्छेदकधर्म्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य विव-
क्षणीयतया तज्ज्ञानीयविषयताश्रयह्रदनिरूपितवृत्तितानवच्छेदकवह्नित्वावच्छिन्नप्रकारतानिरूपितविशे-
ष्यतानिरूपकतया तदसंग्रहात् । अत्रच स्वाश्रयनिरूपितवृत्तिताप्रकारतावच्छेदकसंबन्धावच्छिन्ना

ग्राह्या अन्यथा पूर्वोक्तदोषात् एवं तादृशावच्छेदकत्वाभावो न स्वरूपसंबन्धेन किंतु स्वनिरूपितप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकतानिरूपकसंसर्गतानिरूपकनिरूपितावच्छेदकत्वीयस्वरूपसंबन्धेनातो न प्रागुक्तरीत्या दोषावकाश इति यद्वा विशेष्यताविशिष्टप्रकारताशून्यत्वं सर्वांशे प्रमात्वं स्वव्यधिकरणप्र-

१ ननु सामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यादिबुद्धेः प्रमात्वापत्तिः स्वरूपसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तानिष्ठनिरूपकतावैशिष्टयस्यैव सत्त्वादिति चेन्न। स्वावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वघटितसम्बन्धपञ्चकस्य निवेशात्। वस्तुतस्तु घटत्वप्रतियोगिकसमवायसम्बन्धेन प्रमेयाश्रयवान् घट इत्यादि-

कारावच्छिन्नेत्यादिना विवक्षितं विशेष्यतावैशिष्ट्यंच स्वनिरूपितत्वस्वाश्रयनिष्ठाधिकरणतानिरूप-
कताविशिष्टान्यत्वोभयसंबन्धेन निरूपकतावैशिष्ट्यंच स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्य-
स्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसंबन्धेन स्ववृत्तित्वंच स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन

---

ज्ञानस्य प्रमात्वानुपपत्तिर्दुर्वारा विशेष्यताविशिष्टप्रकारताशून्यत्वासम्भवादतः स्वाश्रयनिष्ठाधिकरणतानिरूपकताविशि-
ष्टान्यत्वकुक्षिप्रविष्टसम्बन्धचतुष्टयं परित्यज्य स्वनिरूपितनिरूपकतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकस्वा-
वच्छेदकसम्बन्धावच्छिन्नप्रकारताकविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतावत्त्वनिवेशः जन्यतावत्त्वंच स्वनिरू-
पितजनकतानवच्छेदकसावच्छिन्नविषयताशून्यज्ञानीयत्वसम्बन्धेनेति तर्ककुशलानां विमर्शः ।

अत्र प्रथमसंबन्धानिवेशे ह्रदो वह्निमानित्याकारकज्ञानीयविषयतानिरूपितवह्निप्रकारतायां ह्रदनिरूपितकालिकसंबन्धावच्छिन्नवह्निनिष्ठनिरूपकतायास्सामानाधिकरण्यादिसंबन्धत्रयेण सत्त्वेन तादृशविषयतायाः स्वपदेन धर्तुमशक्यतया घटो गगनवानिति ज्ञानीयघटविषयताया एव तादृशत्वेन तदनिरूपकोक्तज्ञानस्य प्रमात्वापत्तिः। द्वितीयसंबन्धानिवेशे गुणो द्रव्यमित्यादिज्ञानस्य प्रमात्वापत्तिः गुणत्वनिष्ठनिरवच्छिन्ननिरूपकताया अन्यसंबन्धत्रयेण द्रव्यत्वनिष्ठप्रकारतायां सत्त्वात्। नच निरवच्छिन्ननिरूपकताया अवच्छेदकस्य द्रव्यत्वनिष्ठप्रकारतायाश्चावच्छेदकस्याप्रसिद्ध्या नायं दोष इति वाच्यम्। घटो द्रव्यमिति ज्ञानसंग्रहायोभयत्र स्वानवच्छेदकत्वस्याऽवच्छेदकतासंबन्धेन स्वाभाववत्त्वरूपस्य वक्तव्यत्वात्। तृतीयसम्बन्धानिवेशे स्वरूपतो घटत्वावगाहिज्ञाने घटत्वत्वादिना विषयितासम्बन्धेन घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिः एवं विशिष्टसत्तावान् गुण इति ज्ञानस्य प्रमात्वापत्तिः चतुर्थसंबन्धानिवेशे घटत्वत्वेन घटत्वावगाहिज्ञाने विषयितासंबन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिरिति दिक्॥ श्रीः॥ ॥ ४९ ॥

यथार्थेति व्यर्थमिति यथार्थपददानेपि सद्धेतुस्थलेऽतिव्याप्तिवारणसम्भवादिति॥

नन्वत्र यथार्थपदानुपादाने दोषविषयकसंशये प्रतिबन्धकत्वाभावेनासंभव इति चेन्न। यथार्थपदोपादानेप्यविरुद्धभावाभावद्वयकोटिकसंशयाङ्गीकर्तृमते ह्रदो जलवान्वह्न्यभाववान्वेति संशयसम्भवात्तत्र चानु-

मितिप्रतिबन्धकत्वाभावादसम्भवोऽतो ज्ञाने संशयान्यत्वं निवेशनीयम् एवंचासंभवाभावेन तद्वैयर्थ्यात्। किं-
च तादृशसंशयानङ्गीकारेपि संशयान्यत्वं विशेषणमावश्यकम् अन्यथा बाधग्रन्थे कपिसंयोगाभाववद्वृक्षस्य
भट्टाचार्य्येण बाधत्वाभिधानात्तत्रच कपिसंयोगाभाववान्न वा वृक्ष इत्याकारकसंशयस्य याथार्थ्यविशेषणेना-
वारणेनाव्याप्त्यापत्तेः। नच तथापि वह्निमान् ह्रदो वह्न्यभाववानित्याहार्य्यदोषाविषयकनिश्चये प्रति-
बन्धकत्वाभावेनासम्भववारणाय याथार्थ्यविशेषणमावश्यकमिति वाच्यम्। याथार्थ्यविशेषणेनाप्रामाण्य-
ज्ञानास्कन्दितदोषज्ञानावारणादसंभववारणायाप्रामाण्यज्ञानाभावस्य ज्ञानविशेषणत्वावश्यकतया तत्तद-
प्रामाण्यज्ञानाभावनिवेशे गौरवेणानुगतरूपेणैवाप्रामाण्यज्ञानाभावो निवेशनीयस्तत्प्रकारश्चाभावविशिष्टा-

न्यत्वमिति अभाववैशिष्ट्यंच स्वाभाववत्त्वस्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतावत्त्वोभयसम्बन्धेन

१ नन्वभावविशिष्टान्यत्वघटकाऽभावोऽप्रामाण्यज्ञानाभावोऽवच्छिन्नत्वाभाव इच्छाप्रयोज्यत्वाभावश्च प्रविष्टस्तत्र तावदप्रामाण्यज्ञानाभावप्रतियोग्यप्रामाण्यज्ञानं द्विविधं ज्ञानत्वसामानाधिकरण्येन तदवच्छेदेन च तयोर्मध्ये प्राथमिकाभावस्य विशेष्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्यैवोत्तेजकत्वं द्वितीयस्यतु स्वावच्छेदकक्षणावच्छिन्नस्वाधिकरणनिरूपितसमवायावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्यैवोत्तेजकत्वं तथाच सम्बन्धाननुगमात्कथमुत्तेजकत्वं नच द्वयोर्मध्ये प्रत्येकसम्बन्धनिवेशादनुगमइति वाच्यम् प्राथमिकसम्बन्धमात्रनिवेशे पुरुषान्तरवृत्तिज्ञानस्य प्रतिबन्धकत्वाभावप्रसङ्गात् द्वितीयनिवेशे प्रथमक्षणे अपेक्षाबुद्ध्यात्मकवह्न्यभाववानित्याकारकं तदनन्तरं भाविज्ञानं निर्वह्नित्वाभाववति

सा॰नि॰ एवंचैतादृशविशेषणेनैवोक्ताहार्य्यस्यापि वारणसंभवेन याथार्थ्यविशेषणस्य वैयर्थ्यात् । नच तथाप्यु- विवेचना.
॥ ४७ ॥ क्तविशेषणेनानियताहार्य्यवारणेपि नियताहार्य्यवारणं न सम्भवति समानाकारकज्ञानीयविषयताया ऐ-
क्येपि नियताहार्यज्ञानीयविषयताया दोषविषयकानाहार्य्यज्ञानीयविषयतातो भेदस्य वक्ष्यमाणत्वात्तस्याः
प्रतिबन्धकतानवच्छेदकत्वेन तज्ज्ञाने उक्तोभयसम्बन्धेनाभाववैशिष्ट्यस्याभावात् अतस्तद्व्यावृत्त्यर्थं

---

वह्न्यभावप्रकारताकं तदनन्तरं वह्न्यभाववानित्याकारकं तत्र पूर्वज्ञानस्याप्रतिबन्धकत्वप्रसङ्गादिति चेन्न निरुक्तोभय- ॥ ४७ ॥
सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैवोत्तेजकत्वादिति विभावयन्तु विमत्सरतर्करसिकाः ।

याथार्थ्यविशेषणं सार्थकमिति वाच्यम् । तदुपादानेपि कपिसंयोगाभाववद्वृक्षरूपबाधेऽव्याप्तिः कपिसंयो-
गवान्वृक्षः कपिसंयोगाभाववानिति नियताहार्य्यस्य तद्विशेषणेनावारणात् तादृशाहार्य्यवारणाय वैशि-
ष्ट्यघटकद्वितीयसम्बन्धश्च स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्म्मावच्छि-
न्नविषयितावत्त्वरूपो वक्तव्यः एवंसति सर्वत्र नियताहार्य्यस्य वारणं संभवति तथाच तद्विशेषणस्य
वैयर्थ्यात् । ननु सर्वमिदं तदास्याद्यद्याहार्य्यभेदस्य प्रतिबन्धकतावच्छेदकत्वं स्यात् तदेव न सम्भवति
तथासति ह्रदो वह्निमानिति ज्ञानंप्रति ह्रदो वह्न्यभाववानिति निश्चयस्यांशिकाहार्य्यस्याप्रतिबन्धकत्वा-
पत्तेः एवमेव संशयभेदोपि न प्रतिबन्धकतावच्छेदकः तथाचोक्तविशेषणेनाप्रामाण्यज्ञानास्कन्दितज्ञानवार-

णेपि संशयाहार्य्ययोरवारणादसम्भववारणाय यथार्थेति सार्थकमेवेति चेन्न । आहार्य्यभेदस्य प्रतिबन्धकतावच्छेदकत्वाभावेपि आहार्य्यस्य प्रतिबन्धकत्ववारणार्थं विरोधिविषयतायामिच्छाऽप्रयोज्यत्वस्य संशयस्य प्रतिबन्धकतावारणार्थं विषयत्वानवच्छिन्नत्वस्यच वक्तव्यतयाऽभावपदेनेच्छाप्रयोज्यत्वाभावं विषयत्वावच्छिन्नत्वाभावं चोपादायोक्तोभयसम्बन्धेन तादृशाभाववैशिष्ट्यस्याहार्य्यसंशययोस्सत्त्वेन तद्वारणसम्भवात् । अत्र वैशिष्ट्यघटकस्वाभाववत्त्वञ्च स्वाश्रयविषयतानिरूपकत्वविशेष्यत्वान्यतरसम्बन्धेन विशेष्यत्वनिवेशादप्रामाण्यज्ञानास्कन्दितज्ञानवारणम् प्रथमसम्बन्धनिवेशादाहार्य्यसंशयवारणं बोध्यम् । नन्वेवमपि यथार्थेतिव्यर्थमित्यसंगतं तद्विशेषणसत्त्वेऽसम्भवस्यैवावश्यकत्वात् तथाहि तादृशसम्बन्धेना-

भावविशिष्टान्यदोषविषयकज्ञानमात्रस्य संशयाहार्य्याद्यनात्मकतया यथार्थत्वेन यद्विषयताशाल्यभाव-विशिष्टान्ययथार्थज्ञाननिष्ठभेदप्रतियोगितावच्छेदकतात्वस्य स्व[1]समनियतयद्विषयताशाल्यभावविशिष्टा-

---

१ नन्वत्र दोषविषयकाभावविशिष्टान्यज्ञानम् ह्रदो वह्न्यभाववान् पर्वतश्च तथेत्याकारकमपि तत्र चोक्तयाथार्थ्यवद्भेदो वर्तत इति तादृशभेदप्रतियोगितात्वं तादृशावच्छेदकतायामस्ति तादृशदोषविषयकाभावविशिष्टान्योक्तयाथार्थ्यविशिष्टज्ञाने तादृशभेदाभावेन तादृशयाथार्थ्यज्ञाननिष्ठभेदप्रतियोगितावच्छेदकतात्वं यथार्थत्ववद्भेदप्रतियोगितावच्छेदकतायां नास्तीति कथं समनियतत्वं तयोरिति चेदयं भावः अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्येदानीं निवि-

न्यज्ञाननिष्ठभेदप्रतियोगितावच्छेदकतात्वापेक्षया गुरुतयाऽभावप्रतियोगितानवच्छेदकत्वेन तादृशाभावाप्रसिद्धेः इति चेन्न । याथार्थ्यस्याभावप्रतियोगितावच्छेदककुक्षावनिवेशात् यद्रूपावच्छिन्नविषयिताशाल्यभावविशिष्टान्यज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्यैव निवेशनीयत्वात् याथार्थ्यसामानाधिकरण्यस्यैव तादृशाभावप्रतियोगितावच्छेदकतायां निवेशात् । तन्निवेशप्रकारश्च य-



---

ष्टतयाऽव्यापकविषयताशून्यत्वस्यापि ज्ञानविशेषणतया दोषविषयकांऽऽशिकभ्रमस्याव्यापकविषयताशून्यत्वाभावेन दोषविषयकयथार्थज्ञानस्यैव तादृशतया तत्रच याथार्थ्यवद्भेदाभावेन तयोस्समनियतत्वमस्त्येवेति ।



द्धर्म्मनिष्ठाऽवच्छेदकताभिन्ना सत्यवच्छेदकतात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका यद्धर्म्मनिष्ठाऽवच्छेदकतानिरूपिका याऽवच्छेदकतेत्येवंरीत्या न्यूनाधिकवारकपर्य्याप्तिघटितावच्छिन्नत्वनिष्ठाऽवच्छेदकतानिरूपकविषयितानिष्ठाऽवच्छेदकतानिरूपिका सती ज्ञानत्वनिष्ठाऽवच्छेदकतानिरूपिका सती अभावविशिष्टान्यत्वनिष्ठाऽवच्छेदकतानिरूपिका या याथार्थ्यसमानाधिकरणज्ञाननिष्ठाऽवच्छेदकता तन्निरूपकवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपकभेदनिष्ठाऽवच्छेदकतानिरूपकप्रातियोगित्वनिष्ठाऽवच्छेदकतानिरूपकाऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावत्वेनेति तथाच नासम्भवः । परंतु याथार्थ्यसामानाधिकरण्यघटिताभावत्वस्य तदघटिताभाववत्त्वघटिततया तदवारणीयदोषावारकतया या-

थार्थ्यस्य वैयर्थ्यमिति तदेवाभिहितम् । नचाभावविशिष्टान्यत्वमित्यत्र वैशिष्ट्यघटकस्वाभाववत्त्वस्य विशेष्यत्वस्वाश्रयविषयतानिरूपकत्वान्यतरसम्बन्धेन विवक्षणे याथार्थ्यस्य वैयर्थ्येऽपि विशेष्यत्वमात्रेण स्वाभाववत्त्वविवक्षणे न तद्वैर्थ्यं तादृशोभयसम्बन्धेनाभाववैशिष्ट्यस्याहार्य्यसंशययोरभावात् नह्यन्यत्र यत्किंचिद्विशेषणेन वारणीयदोषवारकस्य विशेषणान्तरस्य वैयर्थ्यं तथा चैतद्विवक्षाभिप्रायेणेत्युक्तमिति वाच्यम् । यथार्थपददानेऽप्यनियताहार्य्यवारणाय तादृशविवक्षाया आवश्यकतया तेनैव संशयनियताहार्य्यवारणसम्भवेन यथार्थपदप्रयोजनाभावात् । एवं भावद्वयकोटिकसंशयानङ्गीकारेऽपि न क्षतिरिति दिक् ॥ श्रीः ॥

केचित्त्वित्यादि यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धक-
तावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयमिति ॥

तथाच यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वमिति पर्य्यवसितम् । ज्ञायमानदोषस्य प्रतिबन्धकतया ज्ञानविषयत्वस्य तदवच्छेदकत्वाल्लक्षणसङ्गतिः अत्रच स्वरूपसम्बन्धरूपावच्छेदकत्वमेव लक्षणे प्रविष्टम् । नच स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षे वक्ष्यमाणदोषग्रास इति वाच्यम् । ज्ञानभेदेपि समानाकारकज्ञानविषयताया ऐक्यमङ्गी-

सा०नि० ॥ ८१ ॥

कृत्य दोषस्य वक्ष्यमाणत्वात् अत्र तदनङ्गीकृत्य लक्षणकरणात् तथाचानाहार्य्यत्वादिकमपि निवेश- नीयम् । नचैवं सत्यसम्भवः अव्याप्यवृत्तित्वज्ञानकालीनह्रदो वह्न्यभाववानित्यनाहार्य्याप्रामाण्यज्ञा- नशून्यनिश्चये प्रतिबन्धकत्वाभावेन तादृशविषयतासामान्यस्यानवच्छेदकत्वादिति वाच्यम् । अव्याप्य- वृत्तित्वज्ञानानास्कन्दितत्वस्यापि ज्ञानविशेषणत्वात् । नचैवं कपिसंयोगीत्यादौ कपिसंयोगाभाववद्वृक्षे- ऽतिव्याप्तिः अव्याप्यवृत्तित्वज्ञानाभावे तज्ज्ञानस्याप्यनुमितिप्रतिबन्धकत्वादिति वाच्यम् । अव्याप्य- वृत्तित्वभ्रमानास्कन्दितत्वस्य विशेषणत्वात् कपिसंयोगाभावो वृक्षेऽव्याप्यवृत्तिरिति ज्ञानस्य प्रमात्वेन ॥ ८१ ॥ तज्ज्ञानकालीनकपिसंयोगाभाववद्वृक्षज्ञानस्योक्तसकलविशेषणविशिष्टतया तदीयविषयतायास्सामान्यान्त-

विवेचना.

र्गतायास्तादृशप्रतिबन्धकतानवच्छेदकत्वेनातिव्याप्तिविरहात् । नचैवमसाधारण्येऽव्याप्तिस्तद्विषयतासामा- न्यान्तर्गतपक्षधर्म्मताज्ञानासमानकालीनज्ञानीयविषयताया अतथात्वादिति वाच्यम् । अस्य दुष्टलक्ष- णतया दोषलक्षणत्वाभावेनाऽसाधारण्यनियतबाधस्वरूपासिद्ध्याद्यन्यतमदोषमादायैव दुष्टे लक्षणस- मन्वयात् । नचैवं सत्ययमसाधारण्येन दुष्ट इति व्यवहारानुपपत्तिर्यद्यपीत्याद्युत्तरग्रन्थखण्डनासङ्ग- तिश्च तत्र तद्दोषघटितलक्षणस्य स्वारस्याभिधानादिति वाच्यम् । तादृशज्ञानीययद्धर्म्मावच्छिन्नवि- षयतात्वव्यापकः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वासाधारण्यविष- यताभिन्नत्वोभयाभाव इति विवक्षणेनादोषात् । ज्ञानभेदेन विषयताभेदानङ्गीकारेतु अनाहार्य्यत्ववि-

तानवच्छेदकत्व+१ ति

शिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वासाधारण्यविषयताशू-
न्यत्वोभयाभाव इति विवक्षणीयम् एवञ्च पाषाणमयत्वविशिष्टपर्वते नातिव्याप्तिः पाषाणमयत्ववा-
न्वह्नयभाववानिति ज्ञानाकालीनपाषाणमयत्वविशिष्टपर्वतनिश्चये उभयाभावासत्त्वादिति दिक् ॥ श्रीः ॥

मूले-लिङ्गांशनिवेशस्यानतिप्रयोजनकतयेति ॥

ननु कथमनतिप्रयोजनकत्वं लिङ्गाज्ज्ञानं लिङ्गज्ञानमिति व्युत्पत्त्या ज्ञाने लिङ्गज्ञानजन्यत्वलाभेनानुमिति-
त्वलाभात् यद्रूपावच्छिन्नविषयकानुमितित्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वमिति लक्षणं पर्य्यवस्य-

ति तथाच तत्राहार्य्यसंशयभेदानिवेशप्रयुक्तलाघवसम्पादनेन सप्रयोजनकत्वात् । नच घटोऽवृत्तिरित्यादौ घटावच्छिन्नरूपबाधेऽव्याप्तिः निर्द्धर्म्मितावच्छेदककानुमित्यनङ्गीकारेण तादृशदोषविषयकानुमित्यप्र-

१ ननु घटवानित्यत्र मतुबर्थस्सम्बन्धः आश्रयश्च तत्र प्रथमपदार्थे सम्बन्धे प्रतियोगितासम्बन्धेन प्रकृत्यर्थस्य तस्य चाश्रयत्वविशिष्टैकदेशाश्रयत्वेऽन्वय इति शाब्दबोधाङ्गीकारात् तत्रानुमितेरपि तत्समानार्थविषयकत्वम् उद्देश्यानुमित्यन्यूनातिरिक्तविषयकशाब्दजनकत्वमिति वदतां चिन्तामणिकाराणामभिप्रेतं तथाच सम्बन्धात्मकप्रथमपदार्थविशेष्यकघटप्रकारकानुमितेस्सधर्मितावच्छेदककत्वान्निर्धर्मितावच्छेदककानुमितिवर्णनमसंगतमिति चेन्न । मतुपो निरर्थकत्वाभिप्रायेण तथा वर्णनादिति ध्येयम् ।

सिद्धेः तथाच लक्षणेऽनुमितित्वप्रवेशो न संभवतीति वाच्यम् । घटवद्भूतलमित्यनुमितिमादायैव तत्र लक्षणसमन्वयसंभवात् । नचाऽव्यापकविषयताशून्यत्वविशेषणस्यावश्यकतया घटावच्छिन्नविषयताऽव्यापकभूतलादिविषयिताशालिताद्दशानुमितिमादाय लक्षणसमन्वयो न संभवतीति वाच्यम् । घटो घटवानित्यनुमितिमादायैव लक्षणसमन्वयात् ताद्दशानुमितिविषयतायाः सर्वस्या अपि घटावच्छिन्नविषयिताव्यापकत्वात् । नच तत्रापि घटांशे घटत्वस्य सामानाधिकरण्येन भानात्तद्विषयितैवाव्यापिकेति वाच्यम् । यद्रूपावच्छिन्नविषयिताव्यापकत्वं प्रतिबन्धकत्वे वक्तव्यं तद्रूपावच्छिन्नविषयिताऽव्यापकविषयिताशून्यत्वस्य लक्षणे न प्रवेशः किंतु किंचिद्रूपावच्छिन्नविषयिताऽव्यापकविषयिताशून्यत्वस्यैव त-



थाच ताद्दशविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्यैव प्रतिबन्धकत्वांशे निवेशात् ह्रदो वह्निमानित्यादौ ताद्दशं रूपं वह्न्यभाववद्ध्रदत्वमेवेति तत्संग्रहः वह्न्यभावत्वाद्यवच्छिन्नविषयिताऽव्यापकविषयिताशून्यतदवच्छिन्नविषयिताशालिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावश्च न प्रतिबन्धकतायामिति नैकदेशेऽतिव्याप्तिः एवं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताऽव्यापकविषयिताशून्यवह्न्यभावत्वाद्यवच्छिन्नविषयिताशालिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावश्च न प्रतिबन्धकतायामेतत्तत्त्वमग्रे स्फुटीभविष्यति तथाच प्रकृते घटवद्भूतलत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यघटाव-

³ वह्निव्याप्यधूमवत्वमपि विशेषणं बोध्यं – २

च्छिन्नविषयिताशालिभूतलं घटवदित्यनुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावमादायैव लक्षणसंभवादिति चेन्न । महानसीयवह्नीतरवह्न्यभाववन्महानसकालीनपर्वतो वह्न्यभाववानित्यत्र वह्निमत्तादृशपर्वतरूपे बाधेऽव्याप्तिस्तत्र दोषविषयकानुमितेर्महानसीयवह्निमन्महानसविषयितारूपाव्यापकविषयिताशालित्वनियमात् । नच महानसीयवह्न्यभाववन्महानस इति बाधकालीनानुमितिमादाय तत्र लक्षणसमन्वयस्तत्र केवलवह्नेरेव भानादिति वाच्यम् । यादृशस्थले एकविशेषेतरबाधस्य पक्षतावच्छेदकता दोषानुमितेः प्राक् तद्विशेषस्य न बाधनिश्चयः तत्र यादृशदोषविषयकानुमितिरेव न तत्रचानुमितित्वघटितलक्षणासंभवाल्लिङ्गांशाऽविवक्षणादिति दिक् ॥ श्रीः ॥

यत्प्रकारत्वेनानुमितिप्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गः पर्वतादावतिप्रसङ्गसंभवेपि यत्संबन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनानुमितिप्रतिबन्धकत्वं तेन संबन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयतासंबन्धावच्छिन्नपर्वतादिनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वादित्यादि ॥ ॥

नन्वत्र पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे नायं सद्धेतुरतस्तत्सामानाधिकरण्येनानुमितिस्थले एवातिव्याप्तिर्वक्तव्या तथाचाऽवच्छेदकावच्छेदेन बाधनिश्चयस्य विरोधितया तस्यच पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारताकत्वेनैव प्रतिबन्धकतया तादृशसंबन्धाप्रसिद्ध्या तेन संबन्धेन तद्वत्त्वस्याप्रसिद्ध्या कथमतिव्याप्तिः । नच संसर्गतावच्छेदकतापर्य्याप्तिमनिवेश्य यद्धर्म्मावच्छिन्नयन्निष्ठसंसर्गताकयन्निष्ठप्रकारताप्रतिबन्धकतावच्छेदिका तद्धर्म्मावच्छिन्नतन्निष्ठसंसर्गताकतन्निष्ठनिरूपकतानिरूपिताधिकरणतावत्त्वस्य विवक्षणात्स्वरूपत्वावच्छिन्नस्वरूपनिष्ठसंसर्गताकवह्न्यभावत्वावच्छिन्नप्रकारता तादृशप्रतिबन्धकतावच्छेदिकेति तादृशसंसर्गतानिरूपकवह्न्यभावत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य धूमादौ सत्त्वादतिव्याप्तिरिति वाच्यम् । तथासति पक्षविशेषणकभ्रममादायाऽप्यतिव्याप्तिस्सम्भवति पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसंबन्धावच्छिन्नाधेयतात्वावच्छिन्नसंसर्गतानिरूपकपर्वतप्रकारतायाः प्रतिबन्धकतावच्छेदकतया संसर्गतावच्छेदककुक्षिप्रविष्टाधेयतात्वावच्छिन्नाधेयत्वनिष्ठसंसर्गतानिरूपकपर्वतनिष्ठनिरूपकतानिरूपिताधिकरणत्वस्य धूमे सत्त्वात्संबन्धभेदेनाधेयताभेदेऽपि संयोगेन वह्न्यभावव्याप्यः पर्वत इति ज्ञानीयपर्वतत्वव्यापकवह्न्यभावव्याप्यप्रतियोगिकसंयोगसंबन्धावच्छिन्नाधेयतासंबन्धेन पर्वतप्रकारताया अप्यवच्छेदकतया संयोगसंबन्धावच्छिन्नाधेयतात्वावच्छिन्नसंसर्गताकनिरूपकताकत्वस्य धूमे सत्त्वात्तादृशभ्रममादाया-

सा०नि० तिव्याप्तिरतो यद्धर्म्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकसंसर्गतानिरूपकप्रकारता तादृ- विवेचना.
॥ ९६ ॥ शप्रतिबन्धकतावच्छेदिका तद्धर्म्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकनिरूपकताका-
धिकरणतावत्त्वं विवक्षणीयम् एवंसति पक्षविशेषणकभ्रममादाय नातिव्याप्तिस्तत्र संसर्गतावच्छेदकता-
त्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य पर्वतत्वव्यापकवह्न्यभावव्याप्यप्रतियोगिकसंयोगसंबन्धाव-
च्छिन्नाधेयतात्वरूपसमुदायवृत्तिसमुदायत्व एव सत्त्वेन तदवच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकता-
कसंसर्गताकनिरूपकत्वस्याप्रसिद्धेः एवंसति पक्षविशेष्यकभ्रममादायापि नातिप्रसङ्गस्तत्रापि पर्वतत्व- ॥ ९६ ॥
व्यापकवह्न्यभावादिप्रतियोगिकस्वरूपत्वादिरूपसमुदायगतसमुदायत्वरूपतादृशप्रतिबन्धकताऽवच्छेद--

कप्रकारतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यवच्छेदकधर्म्मावच्छिन्नपर्य्याप्तिकावच्छेदक-
ताकसंसर्गताकनिरूपकत्वस्याप्रसिद्धत्वात् । यत्तु समानविषयकत्वेन प्रतिबध्यप्रतिबन्धकभावा-
भिप्रायेणेदं तथाच शुद्धस्वरूपसंबन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारताया अपि सामा-
नाधिकरण्येनानुमितिप्रतिबन्धकतावच्छेदकतया पर्य्याप्तिनिवेशेऽपि पक्षविशेष्यकभ्रममादायातिव्याप्ति-
सङ्गतिरिति तन्न। वह्न्यभावव्याप्यः पर्वत इति पक्षविशेषणकभ्रममादायापि तत्सङ्गतेरिति चेन्न । अवच्छे-
दकावच्छेदेन बुद्धौ विधेयसंसर्गे उद्देश्यतावच्छेदकव्यापकविधेयप्रतियोगिकत्ववदुद्देश्यतावच्छेदकताघ-
टकसंसर्गे विधेयव्याप्योद्देश्यतावच्छेदकप्रतियोगिकत्वभानस्य जगदीशेनानुमितावुक्ततया यत्सम्बन्धा-

वच्छिन्नयन्निष्ठावच्छेदकताकयत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारता तादृशप्रतिबन्धकतावच्छेदिका तत्सम्बन्धावच्छिन्नतन्निष्ठाऽवच्छेदकताकतत्सम्बन्धावच्छिन्नतन्निष्ठनिरूपकताकाधिकरणतावत्त्वविवक्षणे पक्षविशेष्यकभ्रममादायातिव्याप्तिस्संगच्छते वह्न्यभावव्याप्यपर्वतत्वप्रतियोगिकसमवायसंबन्धावच्छिन्नपर्वतत्वनिष्ठाऽवच्छेदकतानिरूपकविशेष्यतानिरूपिताया वह्न्यभावत्वनिष्ठस्वरूपसंबन्धावच्छिन्नावच्छेदकतानिरूपकशुद्धस्वरूपसंबन्धावच्छिन्नप्रकारतायाः सामानाधिकरण्येनानुमितिप्रतिबन्धकतावच्छेदकतया स्वरूपसंबन्धावच्छिन्नवह्न्यभावत्वनिष्ठाऽवच्छेदकताकवह्न्यभावनिष्ठशुद्धस्वरूपसंबन्धावच्छिन्ननिरूपकताकाधिकरणत्वस्य धूमे सत्त्वात् । नैवं पक्षविशेषणकभ्रममादायातिव्याप्तिस्तत्र वह्न्यभावव्याप्यत्वाद्यवच्छिन्नविशेष्यतानिरूपिताया वह्न्यभावव्याप्यादिव्याप्यपर्वतत्वप्रतियोगिकसमवायावच्छिन्नपर्वतत्वनिष्ठाऽवच्छेदकतानिरूपकसंयोगादिसंबन्धावच्छिन्नाऽऽधेयतासंबन्धावच्छिन्नवपर्वतनिष्ठप्रकारतायाः सामानाधिकरण्येनानुमितिप्रतिबन्धकतावच्छेदकतया तादृशसंबन्धावच्छिन्नपर्वतत्वनिष्ठाऽवच्छेदकताकनिरूपकत्वाप्रसिद्धेरिति दिक् ॥ श्रीः ॥

विशिष्टदोषविषयकत्वस्य संशयादौ सत्त्वात्पुनरसंभव इति ॥

नन्वत्राभावे संयोगेन वह्नेः साध्यतायां संयोगसंबन्धावच्छिन्नप्रतियोगित्वसंबन्धेन वह्न्यभावस्य स्व-

रूपेण हेतुतायां वह्न्यभाववदभावे लक्षणसमन्वयोऽभावो वह्न्यभाववान्न वेति संशयेपि तत्स्थली-
यानुमितित्वव्यापकपक्षतावच्छेदकाविशिष्टे तादृशहेत्ववगाहित्वघटितधर्म्मावच्छिन्नप्रतिबध्यतानिरूपिता-
या अभावत्वावच्छिन्ने संयोगसंबन्धावच्छिन्नप्रतियोगितासंबन्धेन वह्न्यवगाहित्वघटितधर्म्मावच्छिन्न-
प्रतिबन्धकतायास्सत्त्वात्। तादृशसंशयस्याभावांशे तादृशसंबन्धेन वह्न्यवगाहित्वादितितु भ्रमः अ-
भावो वह्निमान्वह्न्यभाववदवृत्तितादृशवह्न्यभाववांश्चेति ज्ञानस्य व्याप्तिघटकाभावांशे संयोगसंबन्धा-
वच्छिन्नप्रतियोगितासंबन्धेन वह्न्यवगाहित्वेनाहार्य्यतया तादृशानुमित्यप्रसिद्धेरिति दिक् ॥ श्रीः ॥

अनातिरिक्तवृत्तित्वंच स्वव्यापकतत्कत्वमिति ॥

नन्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावेऽनाहार्याप्रामाण्यज्ञानानास्कन्दितदोषविषयकनिश्चयवृत्तित्वाभाव एव कुतो नोक्तः व्यापकत्वानिवेशेनात्र लाघवात् । नचाधिकरणभेदेनाभावभेदाङ्गीकर्तृनये घटादिवृत्तिप्रतिबन्धकत्वाभावस्य तादृशोदासीननिश्चयावृत्तित्वात्तादृशोदासीनेतिऽव्याप्तिरिति वाच्यम् । तादृशप्रतिबन्धकत्वाभावत्वे तादृशनिश्चयवृत्तितानवच्छेदकत्वविवक्षणे दोषाभावात् अधिकरणभेदेनाभावभेदाङ्गीकर्तृमतेपि तादृशाभावत्वस्यानुगतत्वादिति चेन्न । केवला-

भावत्वे निश्चयवृत्तित्वावच्छेदकत्वसत्त्वे विशिष्टाभावत्वे तदभावस्यासत्त्वेनासंभवतादवस्थ्यात् यदि ता-
दृशप्रतिबन्धकताप्रतियोगिकत्वाभावत्वगतद्वित्वे तादृशनिश्चयवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिता-
कपर्य्याप्त्यनुयोगितावच्छेदकत्वाभावो निवेश्यते तदा न लाघवप्रत्याशेति दिक् ॥ श्रीः ॥ ॥



यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवानति-

१ नन्वत्र लाघवाभावेपि तुल्यत्वेन विनिगमनाविरह इति चेन्न । अत्रोभयत्र न्यूनाधिकवारकपर्य्याप्तिसंकलिताभावस्य निविष्टत्वात् सिद्धान्तेचैकाभावस्य निवेशेन लाघवस्य जागरूकत्वादिति ध्येयम् ।



रिक्तवृत्तित्वमित्यादिशुद्धह्रदत्वावच्छिन्नेतिप्रसङ्गाच्चेति॥

नन्वत्र प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमित्यनेन प्रकृतानुमितिप्रतिबन्धकताशून्यानाहार्य्याप्रा-
माण्यज्ञानानास्कन्दितनिश्चयवृत्तिविषयितानिरूपकतानवच्छेदकं यद्रूपं तद्वत्त्वं विवक्षितं तथाच नो-
क्तातिव्याप्तिः ह्रदत्वस्य तादृशप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तिविषयितानिरूपकतावच्छेदकत्वात् ।
नच ह्रदत्वे तादृशनिश्चयनिष्ठविषयितानिरूपकतावच्छेदकत्वसत्त्वे विशिष्टह्रदत्वे तादृशाभावस्य दुर्घ-
टत्वादसंभव इति वाच्यम् । प्रतिबन्धकताशून्यतादृशनिश्चयनिष्ठविषयिताविशिष्टान्यधर्म्मविशिष्टवत्त्वस्य
विवक्षणीयत्वात् धर्म्मे विषयितावैशिष्ट्यंच स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगि-

पर्य्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन सच धर्म्मः ह्रदत्वादिनिष्ठमेकत्वमेव नतु वह्न्यभाववद्ध्रदत्वगत-
समुदायत्वमित्यसंभवाभावात् । नचासाधारण्येऽव्याप्तिरसाधारण्यतावच्छेदकधर्म्मस्य वह्निव्यापकीभू-
ताभावप्रतियोगित्ववज्जलत्वादेः पक्षधर्म्मताज्ञानासमानकालीनतादृशप्रतिबन्धकताशून्यासाधारण्यविषय-
कतादृशनिश्चयवृत्तिविषयितानिरूपकतावच्छेदकत्वादिति घाच्यम् । स्वमतेपि तादृशाव्याप्तेस्समानत्वा-
त् यदिच स्वमते प्रकृतपक्षे प्रकृतहेतुमत्ताज्ञानसमानकालीनत्वप्रकृतानुमित्यप्रतिबन्धकत्वोभयाभा-
वे यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वं विवक्ष्यते तदैतन्मतेऽपि तादृशप्रतिबन्धकताशून्या-
साधारण्यविषयताशून्यतादृशनिश्चयवृत्तिविषयितानिरूपकतानवच्छेदकत्वविवक्षणे न कश्चिद्दोष इति

चेन्न । ह्रदो वह्निमानित्यादौ कपिसंयोगोभाववत्कपिसंयोगवत्यतिव्याप्तेस्तद्विषयकज्ञानस्य नियताह्रार्यतया तादृशनिश्चयनिष्ठविषयितानिरूपकतानवच्छेदकत्वादिति दिक् ॥ श्रीः ॥

---

१ नन्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यो यः प्रकृतानुमितीयविषयताविशिष्टान्यो निश्चयस्तदवृत्तित्वस्य लक्षणघटकत्वान्नातिव्याप्तिः प्रकृतानुमितीयविषयितावैशिष्ट्यं च स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयितावत्त्वस्वनिरूपकताऽवच्छेदकधर्मावच्छिन्नविषयितावज्ज्ञानाविषयकेच्छाप्रयोज्यविषयितावत्त्वान्यतरसम्बन्धेन तथाच ह्रदो वह्निमानित्यादौ ह्रदो वह्निमान्न वेत्यादिसंशयादिकमेव निरुक्तविषयिताविशिष्टं तदन्यं च घटवद्भूतलमित्यादिज्ञानं तदवृत्तित्वस्य वह्न्यभाववद्ध्रदत्वादौ सत्त्वाल्लक्षणसमन्वयः प्रकृतेच कपिसंयोगाभाववत्कपिसं-

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान्वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकतया तस्य ह्रदो वह्निमानित्याद्यनुमित्यविरोधितयाऽसंभव इति ॥ ॥



नन्वत्रासंभवाभिधानमसङ्गतं सामानाधिकरण्येन ह्रदे वह्नेः साध्यत्वेऽवच्छेदकावच्छेदेन बाधे लक्षणस-

योगवत्त्वस्याऽतथात्वादिति चेन्न । एतत्कल्पे अभावस्य द्विधा निवेशेन उभयत्र न्यूनाधिकवारकपर्य्याप्तिनिवेशप्रयुक्तगौरवस्य दुर्वारत्वादिति ध्येयम् ।



त्त्वात् तथाहि ह्रदत्वावच्छेदेन वह्न्यभावावगाहिज्ञाने ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपस्य प्रकारसंबन्धतया तत्स्थलीयबाधे तादृशसंबन्धावच्छिन्नवह्न्यभावनिष्ठनिरूपकताकविषयितामादायैव लक्षणसमन्वयात् तादृशविषयितायाश्च जातिमान्वह्न्यभाववानिति ज्ञानेऽसत्त्वात् तत्रहि जातित्वावच्छिन्नव्यापकवह्न्यभावप्रतियोगिकस्वरूपमेव प्रकारसंबन्धस्तादृशसंसर्गकोटिप्रविष्टव्यापकत्वरूपाभावस्तु विलक्षण इति चेदत्र केचिदसंभवशब्देनाव्याप्तिरेवाभिहितेत्याहुः । अन्येतु व्यापकत्वरूपाभावगताभावत्वस्य प्रमेयत्वेन यत्र भानं ह्रदत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वीयप्रमेयविशिष्टवद्धह्न्यभावप्रतियोगिकस्वरूपसंबन्धेन वह्न्यभाववान्ह्रद इत्याकारकज्ञानस्य वारणासंभवेनासंभव एवेत्याहुः । वस्तुतस्तु

अव्याप्तिशङ्कैव नावतरति अवच्छेदकावच्छेदेनोद्देश्यविधेयभावस्थलीयप्रतीतौ उद्देश्यतावच्छेदकता-
पर्य्याप्त्यधिकरणधर्म्मनिरूपितव्यापकत्वमेव संसर्गशरीरे भासते नतु तदवच्छेदकावच्छिन्ननिरूपित-
व्यापकत्वमपि तथासति अवच्छेदकाऽवच्छेदेन विरोधिधियः प्रतिबन्धकतावच्छेदकशरीरे धर्मितावच्छेदकावच्छिन्नत्वेन विशेष्यताया निवेशे प्रयोजनाभावः तद्धर्म्मावच्छिन्नव्यापकत्वघटितप्रकारतावच्छे-
दकसंसर्गकबुद्धेस्तद्धर्म्मावच्छिन्नविशेष्यकत्वनियमात् नचेष्टापत्तिः अवच्छेदकावच्छेदेन बाधस्य प्रतिब-

१ ननु ह्रदत्वावच्छिन्नव्यापकत्वघटितप्रकारतावच्छेदकसंसर्गकबुद्धित्वस्य ह्रदवृत्तिभेदप्रतियोगितावच्छेदकत्वाभा-

न्धकतावच्छेदकविषयित्वानिरूपकधर्मितावच्छेदकघटिततया वह्न्यभाववद्ध्रदत्वावच्छिन्नस्य दोषत्वानुपपत्तेः एवंचोद्देश्यतावच्छेदकत्वपर्य्याप्त्यधिकरणघटितत्वस्य संसर्गत्वस्वीकारेऽवच्छेदकावच्छेदेन बाधनिश्चयप्रतिबन्धकतावच्छेदकशरीरे धर्मितावच्छेदकावच्छिन्नत्वेन धर्मिविशेष्यताया निवेश आवश्यकः

---

ववद्ध्रदवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभाववानित्यादिज्ञाने सत्त्वेन तत्र ह्रदत्वावच्छिन्नविशेष्यताया असत्त्वात्कथं तद्धर्मावच्छिन्नविशेष्यकत्वनियम इत्युपपद्यत इति चेदत्र नवीनविवेचनानिर्मातृश्रीरङ्गदेशिकचरणकृपालब्धविमर्शाः वदन्ति–तद्धर्मावच्छिन्नमित्यनेन ह्रदत्ववद्ध्रदवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वनिवेशः तथाच ह्रदत्वनिष्ठप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतायास्तत्र निविष्टत्वान्नानुपपत्तिगन्धोपीति ।

अन्यथा ह्रदो वह्निमानित्यादौ जातिमान्वह्न्यभाववानित्यादिनिश्चयान्तर्भावेण प्रतिबध्यप्रतिबन्धकभाव-व्यभिचारात् । तादृशनिश्चयस्यापि ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावप्रकार-कत्वात् । धर्मितावच्छेदकावच्छिन्नत्वेन विशेष्यतानिवेशेतु प्रतिबध्यज्ञानीयविशेष्यतावच्छेदकता यादृशी तादृश्या एव प्रतिबन्धकतावच्छेदकशरीरे नीवेशनीयतया न व्यभिचारः एवंच जातिमान्वह्न्य-भाववानिति ज्ञानेऽप्यवच्छेदकावच्छेदेन बाधे यां विषयतामादाय लक्षणं संगमनीयं तस्याः सत्त्वात् कथं सामानाधिकरण्येन साध्यकस्थले लक्षणसमन्वय इति दिक् ॥ श्रीः ॥

जलवान्वह्निमानित्यादिस्थलीयदोषासंग्रहेणाविशेषितधर्म्मावच्छिन्न-पक्षादिस्थलीयस्यापि किंचिद्विशिष्टतद्घटितदोषस्यासंग्रहेणच पक्ष-तावच्छेदकाद्यंशेऽन्याऽप्रकारकत्वनिवेशस्याशक्यत्वादिति ॥

नन्वत्र पक्षतावच्छेदकाद्यंशे किंतावदन्याप्रकारकत्वं यदि पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपित-प्रकारत्वानिरूपकत्वं तदा ह्रदो वह्न्यभाववानिति ज्ञानस्याप्यसंग्रहस्तस्यापि सामानाधिकरण्यसम्ब-न्धावच्छिन्नह्रदत्वनिष्ठविशेष्यतानिरूपितवह्न्यभावनिष्ठप्रकारतानिरूपकत्वात् तथाचासम्भवः । नच ता-

सा॰नि॰ दृशप्रकारतायां प्रकारत्वानवच्छिन्नत्वं षिशेषणं देयं दोषज्ञानीयह्रदत्वांशे सामानाधिकरण्येन वह्न्यभावप्रकारताया ह्रदत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वावच्छिन्नतया न तदसंग्रहः जातिमान्वह्न्यभाववानिति ज्ञानस्य ह्रदत्वनिष्ठविशेष्यतानिरूपितजातित्वनिष्ठतादृशप्रकारतानिरूपकत्वात्तद्वारणं चेति वाच्यम्। तादृशज्ञानवारणेऽपि प्रमेयत्वेन प्रकारतावच्छेदकावगाहिनो ह्रदो वह्नीयप्रमेयवत्त्वानिति ज्ञानस्यावारणात् । नचादिपदग्राह्यप्रकारतावच्छेदकांशेऽन्याप्रकारकत्वं निवेश्यतामिति वाच्यम् । ह्रदो वह्न्यभाववानिति ज्ञानस्यापि प्रकारतावच्छेदकीभूतवह्न्यंशे वह्नित्वप्रकारकत्वेनासंग्रहापत्तेरिति चेन्न ।

विशेष्यताविशिष्टविशेषणत्वानिरूपकत्वस्य तत्त्वात् । विशेष्यतावैशिष्ट्यञ्च स्वनिरूपितत्वस्वा-

---

१ अथैवमपि विशिष्टे वैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदको धर्मः स्वविशेष्ये भासमानस्सन् विशेष्यतावच्छेदकेपि भासते धर्मिपारतन्त्र्येणेति युक्तिबलात् वह्नित्वस्याभावत्वांशे विशेषणत्वेन तन्निष्ठविशेषणताया निरुक्तोभयसम्बन्धेनाभावत्वनिष्ठविशेष्यताविशिष्टतया ह्रदो वह्न्यभाववानित्यादिज्ञानसंग्रहासम्भव इति चेन्न। विशिष्टस्य वैशिष्ट्यमिति व्युत्पत्तिसिद्धार्थं गृहीत्वा विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदको धर्मः स्वविशेष्ये भासमानस्सन् स्वविशेष्यविशेष्येपि भासत इति नियमात् वह्नित्वस्य विशेषणत्वे निरुक्तदोषासम्भवादिति विभावयन्तु तर्करसिकाः ।

वच्छेद्यावच्छेदकतानिरूपकविषयतानिरूपितविशेषणत्वानवच्छिन्नत्वोभयसम्बन्धेन जातिमान्वह्न्य-
भाववानिति ज्ञानञ्च जातिनिष्ठविशेष्यतया निरूपिता तादृशविशेष्यत्वावच्छेद्यावच्छेदकतानि-
रूपकजात्यवच्छिन्नविशेष्यतानिरूपितवह्न्यभावनिष्ठविशेषणत्वानवच्छिन्नाच या जातित्वनिष्ठविशेषण-
ता तन्निरूपकमिति तदसंग्रहः ह्रदो वह्न्यभाववानिति ज्ञानञ्च न तादृशविशेषणतानिरूपकं ह्रद वह्न्य-
भाव निष्ठविशेष्यत्वावच्छेद्यावच्छेदकत्वाप्रसिद्धेः वह्निनिष्ठविशेष्यत्वावच्छेद्यावच्छेदकत्वप्रसिद्धावपि त-
न्निरूपकाभावत्वावच्छिन्नप्रकारतातिरूपितविशेषणत्वाप्रसिद्धेश्च विशेष्यताविशिष्टविशेषणतायां पक्षता-
वच्छेदकतावच्छेदकत्वानवच्छिन्नत्वस्य स्वनिरूपितावच्छेदकत्वावच्छिन्नत्वसम्बन्धावच्छिन्नपक्षतावच्छे-

दकत्वाभाववत्त्वस्य वा निवेशे जलवान्वह्न्यभाववानित्यादिस्थलीयदोषासंग्रहाभावेनाविशेषितधर्म्माद-
च्छिन्नेत्यादि तथाच ह्रदो वह्निमान्जातिमत इत्यादिस्थलीयव्यभिचारे वह्न्यभाववद्वृत्तिजातिमत्त्व-
व्याप्तिः तादृशव्यभिचारज्ञानस्य जातिवृत्तिविशेष्यतानिरूपिता तादृशविशेष्यत्वावच्छेद्याऽवच्छेदकता-
निरूपकजात्यवच्छिन्नविशेष्यतानिरूपितवह्न्यभाववद्वृत्तित्वनिष्ठविशेषणत्वानवच्छिन्नाच या जाति-
त्वनिष्ठविशेषणता तन्निरूपकत्वात् तस्यां चोक्तसम्बन्धेन पक्षतावच्छेदकत्वाभाववत्वस्यच सत्त्वादि-
ति दिक् ॥ श्रीः ॥

यद्यद्रूपावच्छिन्नस्य यस्य यस्य विशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठवि-
षयिताभिन्नकिंचिदवच्छिन्नविषयिताशून्यत्वं ज्ञाने निवेशनीयमिति ॥

अत्रेकेचित् यस्य यस्येत्यनुपादाने ह्रदो वह्निमानित्यादौ बाधासंग्रहः अभावत्वेन ह्रदत्वावगाह्य-
भाववान् वह्न्यभाववानिति ज्ञानावारणात् तत्राभावत्वावच्छिन्नस्य विशिष्टघटकतयाऽभावत्वावच्छिन्न-
विषयताभिन्नघटकान्तरविषयताभिन्ना किंचिदवच्छिन्नविषयताघटत्वावच्छिन्नविषयतैव तदनिरूपकत्व-
स्य तादृशज्ञाने सत्त्वात् । यस्य यस्येत्युपादाने चाभावत्वाऽवच्छिन्नस्याभावस्य विशिष्टघटकत्वेपि

तेन रूपेण ह्रदत्वस्य विशिष्टाऽघटकतया तद्रूपावच्छिन्नतन्निष्ठविषयतानिरूपकत्वात्तज्ज्ञानवारणम् त-
थाच यद्रूपावच्छिन्नविषयिताव्यापकरूपविशिष्टविषयताभिन्नकिंचिदवच्छिन्नविषयत्वानिरूपकत्वं तदर्थः
विषयिताव्यापकत्वञ्च रूपे स्वविशिष्टविषयतावत्त्वसम्बन्धेन स्ववैशिष्टचञ्च विषयतायां स्वावच्छिन्न-
त्वस्वसामानाधिकरण्योभयसम्बन्धेन विषयतायां रूपवैशिष्टचञ्च एतदुभयसम्बन्धेन अभावत्वावच्छि-
न्नह्रदत्वविषयताच न तादृशरूपविशिष्टाऽभावत्वसामानाधिकरण्याभावात् अतो न तत्संग्रह इति वद-
न्ति । तन्न सम्यक् । ह्रदो वह्न्यभाववानिति ज्ञाने वह्न्यभाववद्ध्रदवैशिष्टचावगाहिबुद्धिनियामिकाया
विलक्षणविषयिताया अभाववान्वह्न्यभाववानिति ज्ञानेऽसत्त्वात् अन्यथा तादृशज्ञानानन्तरं वह्न्यभा-

ववद्ध्रदं जानामीत्यनुव्यवसायापत्तेः । नच जातिमान्वह्न्यभाववानिति ज्ञानानन्तरमपि तादृशानुव्यवसायाभावात्तत्रापि तादृशविषयिताया अभावप्रसङ्गः तथाच तादृशज्ञानमादाय दोषकथनासङ्गतिरिति वाच्यम् । जातिमान्वह्न्यभाववानिति ज्ञाने जातित्वादिघटितसमुदायवृत्तिसमुदायत्ववृत्तिनिरूपकताकविषयिताया एवाधिकन्यूनवारकपर्य्याप्तिघटितायास्तत्र सत्त्वात् जातित्वाऽघटितह्रदत्वादिघटितसमुदायत्ववृत्तिनिरूपकताकविषयितया वह्न्यभाववद्ध्रदं जानामीति विशिष्टबुद्धिनियामिकायास्तत्राऽसत्त्वान्न जातिमान्वह्न्यभाववानिति ज्ञानानन्तरं तादृशानुव्यवसायप्रसङ्गः अधिकन्यूनवारकपर्य्याप्तिघटितनिरूपकताकविषयिताया एव शिष्टबुद्धिनियामकत्वस्वीकारात् अधिकवारकपर्य्याप्त्यघटि-



तह्रदत्वादिघटितसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगितापर्य्याप्तिकावच्छेदकताकविषायिताया अपि जातिमान्वह्न्यभाववानिति ज्ञानेपि सत्त्वात्तदादाय दोषाभिधानसङ्गतिः अभाववान्वह्न्यभाववानिति ज्ञानेऽभावत्वस्य ह्रदत्वनिष्ठनिरूपकताव्यधिकरणतयातादृशज्ञानवृत्तिविषयितानिरूपकतावच्छेदकसमुदायेऽप्रवेशेनाभावत्वाघटितह्रदत्वादिघटितसमुदाय एव निरूपकतावच्छेदकतापर्य्याप्तेस्तादृशज्ञानावगाहितादृशानुव्यवसायापत्तिरतस्तादृशविषयिता तादृशज्ञाने नास्त्येवेति वस्तुतो ह्रदः प्रमेयवह्नित्ववत्वानित्यादिस्थलीयबाधेऽव्याप्तिस्तत्र प्रमेयत्वेन ह्रदत्वावगाहिज्ञानावारणादतो यस्य यस्येत्युपादानं

१ नन्वत्र प्रमेयवह्निसाध्यकस्थलपरित्यागे बीजाभाव इति चेन्न । गुरुधर्मस्यभावप्रतियोगितानवच्छेदकत्वेन वह्न्य-

तथाच ताद्दृशविशिष्टावच्छिन्नभेदप्रतियोगितावच्छेदकताविशिष्टविषयताभिन्नविषयत्वानिरूपकत्वं त-



भाववद्ध्रदस्य बाधत्वेनेष्टासिद्धेः। नच गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वं प्रतीतिबलात् अवच्छेदकत्वं साधितमवच्छेदकत्वनिरुक्तौ शिरोमणिनेति वाच्यम्। प्रमेयवह्न्यभाववद्ध्रदस्य शुद्धवह्न्यभाववद्ध्रदघटितत्वेन बाधत्वासम्भवादतस्तत्परित्याग इति ध्येयम्।

१ तादृशविशिष्टावच्छिन्न इत्यनेन दोषतावच्छेदकह्रदत्वविशिष्टोह्रदाद्यवच्छिन्नप्रतियोगिताको ह्रदवान्नेति प्रतीतिसिद्धो भेदो ग्राह्यः।

दर्थः विषयतायामवच्छेदकतावैशिष्ट्यं स्वावच्छेदकावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन असं-ग्राह्यज्ञानीयप्रमेयत्वावच्छिन्नहृदत्वनिष्ठविषयताच न तादृशप्रतियोगितावच्छेदकताविशिष्टेति तदसंग्रहः अवच्छेदकतावैशिष्ट्यघटकावच्छेदकताच साक्षात् अतो हृदत्वनिष्ठाऽवच्छेदकतायां प्रमेयत्वस्य परम्परयाऽवच्छेदकत्वेपि न क्षतिरिति दिक् ॥ श्रीः ॥

---

१ एतादृशाव्यापकविषयताशून्यत्वनिवेशेऽप्यभावत्वेन हृदत्वावगाह्यऽभाववान् वह्न्यभाववानिति ज्ञानमादाया-सम्भववारणं कथमिति चेत् यद्यद्रूपावच्छिन्नस्येत्यादिपूर्वोक्तविशेषणस्यापि सत्त्वात् जातिमान् वह्निमानित्यादिस्थ-

लीयवह्न्यभाववज्जातिमति बाधेऽव्याप्तिः घटत्वादिरूपवह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयत्वाव्यापकविषयतात्वस्य चालनीन्यायेन घटत्वह्रदत्वरूपवह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयत्वस्य सत्त्वात् तच्छून्यत्वस्य कुत्रापि दोषज्ञानेऽभावात् यदिच यद्रूपपदेन दोषतावच्छेदकमनुपादाय दोषविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्ममादाय तद्विशिष्टविषयताघटितलक्षणस्य निर्दुष्टत्वम् एवंचेत्तर्हि प्रथमलक्षणेपि यथार्थेति व्यर्थमित्यसङ्गतम् अभाववान् वह्न्यभाववानित्यादिज्ञानवारणेन तस्य सार्थकत्वात् इति चेन्न । विषयितासम्बन्धेन यद्रूपावच्छिन्नविशिष्टनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वमिति लक्षणाभिप्रायेण तद्वैयर्थ्याभिधानात् प्रकारान्तरेण द्वितीयलक्षणकरणं तु शिष्यबुद्धिव्युत्पादनार्थम् ।

यद्रूपावच्छिन्नविषयतात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताशून्यत्वस्य ज्ञानविशेषणतयेति ॥

यद्रूपावच्छिन्नविषयितावद्वृत्तिर्यः किंचिद्रूपावच्छिन्नविषयता नास्तीति प्रतीतिसिद्धः किंचिद्रूपनिष्ठाऽवच्छेदकताभिन्नावच्छिन्नतात्वनिष्ठाऽवच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशाऽवच्छेदकतानिरूपकावच्छिन्नत्वनिष्ठाऽवच्छेदकताभिन्नविषयितात्वनिष्ठाऽवच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकाभावस्तत्प्रतियोगिविषयिता नास्तीति प्रतीतिसिद्धाभावं तद्व्यक्तित्वेनोपादाय तन्निष्ठाऽवच्छेदक-

सा०नि०
॥ ७० ॥

ताभिन्ना सती यद्रूपावच्छिन्नविषयितानिष्ठाऽवच्छेदकताभिन्ना तादृशनिश्चयत्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकेत्यादिरीत्या निश्चयनिष्ठाऽवच्छेदकतानिरूपकवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपकभेदनिष्ठाऽवच्छेदकतानिरूपकप्रतियोगित्वनिष्ठाऽवच्छेदकतानिरूपकाऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावः प्रतिबन्धकतायां निवेशनीय इति दिक् ॥ श्रीः ॥

नच सामान्यपदस्य व्यापकत्वार्थकतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयितात्वव्यापकत्वं प्रवेश्यं तदपेक्षया प्रतिबन्धकतायां

विवेचना.
॥ ७० ॥

विशिष्टविषयिताव्यापकत्वनिवेशनमेवोचितमिति वाच्यमिति ॥ ॥

नन्वत्र प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयितात्वव्यापकत्वापेक्षया प्रतिबन्धकतायां विशिष्टविषयताव्यापकत्वनिवेशनमेवोचितामित्यनेन लाघवमभिप्रेतम् । तन्न सम्भवति । लाघवस्य विपरीतत्वात् प्रतिबन्धकतायां व्यापकत्वनिवेशे विशिष्टविषयितावन्निश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्य निवेशनीयतया तत्प्रतियोगितावच्छेदककुक्षौ निश्चयस्यापि निवेशात्तादृशाभावश्च गुरुशरीरः एतन्मते विशिष्टविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रती-

तिसिद्धाभावस्य निवेशात्तत्र निश्चयस्यावच्छेदककुक्षावनिवेशेन तादृशाभावो लघुशरीर इत्येतद्विवक्षाया एव लघुशरीरत्वात्। नचाहार्य्यादिविषयतायाः प्रतिबन्धकतावच्छेदकत्वाभावादसम्भववारणायानाहार्य्यनिश्चयीययद्रूपावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्यैव निवेशनीयतया तदंशे तौल्यं प्रतिबन्धकतावच्छेदकतायां व्यापकत्वस्य नीवेशनीयतया लक्षणशरीरं गुर्वीति वाच्यम्। तन्मतेपि प्रतिबन्धकतायामेवाऽवच्छेदकतासम्बन्धेन व्यापकत्वस्य वक्तव्यत्वात्। न चैवंसति स्वमते तादृशनिश्चयनिष्ठान्यताभावाऽप्रतियोगित्वरूपव्यापकत्वनिवेशनं सम्भवति तन्मते वृत्त्यनियामकसम्बन्धस्यात्यन्ताभावप्रतियोगितानवच्छेदकत्वेनावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकात्य-



न्ताभावाप्रसिद्धेः तादृशविषयितानिष्ठतत्सम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वाभावस्यैव निवेशनीयतया तादृशव्यापकत्वरूपाभावप्रतियोगितावच्छेदकत्वं प्रतियोगितायामपीति गौरवमिति वाच्यम्। तथापि तादृशात्यन्ताभावाप्रतियोगित्वस्य कुत्राप्यसत्त्वात्तादृशात्यन्ताभावप्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकैकैकत्ववदुभयावृत्तिधर्म्मवत्त्वं विवक्षणीयम् धर्म्मे उभयावृत्तित्वानुपादाने तादृशैकत्ववत्प्रमेयत्ववत्त्वमादायोदासीनेऽतिव्याप्तेस्तथाच स्वमते एव गौरवात्। नच तथापि तन्मतेपि तादृशविषयितावृत्तितादृशप्रतिबन्धकतावद्घटोभयभेदं तादृशप्रतिबन्धकतावद्वह्नित्वावच्छिन्नविषयित्वादिभेदं चादायासम्भववारणायोक्तविवक्षाऽवश्यकीति वाच्यम्। तथापि तादृशविषयि-

तावृत्तिभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकैकत्ववत्त्वस्यैव विवक्षणीयत्वात् तद्व्यक्तेः स्वरूपतो भानाङ्गीकारेण तद्व्यक्तिमान्नेत्याकारकभेदस्य तादृशविषयितायामसत्त्वेन तादृशैकत्ववदुभयावृत्तिधर्म्मवत्त्वस्याऽविवक्षणीयतया लाघवस्याऽनपायादिति चेन्न । तद्व्यक्तेः स्वरूपतो भानानङ्गीकारे तादृशविवक्षायां विषयितावृत्तिर्यत्किचित्प्रतिबन्धकताव्यक्तिमद्भेदमादायासम्भववारणाय तादृशविषयितावृत्तिभेदप्रतियोगितावच्छेदकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकैकत्ववद्धर्म्मवत्त्वस्य विवक्षणीयतया तादृशधर्म्मे उभयावृत्तित्वानुपादाने तादृशप्रमेयत्ववत्त्वमादायोदासीनेऽतिव्याप्तेः तथाच गौरवं दुष्परिहरमेवेति । अथवा स्वमते तादृशनिश्चयवृत्त्यु-

भयावृत्तिधर्म्मैत्तरधर्म्मानवच्छिन्नप्रतियोगिताकात्यन्ताभावाप्रतियोगित्वं विवक्षणीयं तन्मते विषयितावृ-त्त्युभयावृत्तिधर्म्मैत्तरधर्मानवाच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रातियोगिताकभेदप्रतियोगिता-तावच्छेदकत्वाभावो वक्तव्य इति गौरवमिति दिक् ॥ श्रीः ॥

---

१ नन्वत्रावच्छेदकतासम्बन्धस्यावच्छेदकतात्वेन प्रवेशो न सम्भवति तस्याननुगतत्वात् तथाच यत्किंचिदवच्छे-दकतात्वेन निविशो भाव्यः तथा निवेशेऽसम्भवः तथाहि अप्रामाण्यज्ञानाभावनिष्ठस्वनिरूपितावच्छेदकतात्मकव्यधिकर-णसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्यैव प्रतिबन्धकतायां सत्त्वेन तदभावरूपव्यापकत्वस्यासत्त्वादिति चेन्न । स्व-निरूपितनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्यैव प्रतियोगितावच्छेदकताघटकत्वादिति ध्येयम् ।

ताद्दशाहार्य्यज्ञानसमानाकारकानाहार्य्यज्ञानाप्रसिद्धेरिति ॥



अत्र तत्समानाकारत्वं नाम तद्वृत्तिमुख्यविशेष्यतावृत्तित्वम् मुख्यविशेष्यतावृत्तित्वञ्च स्ववृत्तिमुख्यविशेष्यतावत्त्वसम्बन्धेन मुख्यविशेष्यतावत्त्वञ्च स्वसमनियतत्वस्वनिरूपितविषयतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मवृत्तित्वोभयसम्बन्धेन धर्म्मवृत्तित्वञ्च स्वनिरूपितविषयतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन अत्र प्रथमसम्बन्धनिवेशाद्घटत्वेन घटपटावगाहिज्ञानयोः समानाकारत्वव्यावृत्तिः सामानाधिकरण्यमात्रनिवेशनेन तद्व्यावर्तनेपि घटत्वेनैकघटावगाहिज्ञानस्य ताद्दशनानाघटावगाहिज्ञानस्यच घटत्वेन घटपटावगाहिज्ञानस्य समानाकारकत्वापत्तिः अतस्तदुपेक्षणम् समनिय- ॥ ७३ ॥

तत्वघटकदलद्वयमपि घटत्वेनैकानेकघटविषयकज्ञानयोर्वारणार्थमेव तज्ज्ञानवृत्तिमुख्यविशेष्यतावृत्तित्वमित्यत्र मुख्यत्वानुपादाने घटवद्भूतलमित्याकारकज्ञानस्य घटवद्भूतलवान्देश इत्याकारकज्ञानसमानाकारत्वापत्तिः तदीयघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यतायां स्वीयमुख्यविशेष्यतावत्त्वसम्बन्धेनोक्तज्ञानस्य सत्त्वात् ज्ञानवृत्तिताघटकविशेष्यतायां मुख्यत्वानुपादाने उक्तोत्तरज्ञानस्य पूर्वज्ञानसमानाकारत्वापत्तिः द्वितीयसम्बन्धानिवेशे घटत्वेन घटज्ञानस्य पटत्वेन घटज्ञानस्य घटो रूपवान्घटो रसवानित्याकारकज्ञानयोश्च समानाकारत्वापत्तिरिति दिक् ॥ श्रीः ॥

१ ननु समानाकारकत्वस्य निरुक्तरूपत्वे ह्रदो जातिमानित्याकारकज्ञानस्य एकत्र द्वयमिति रीत्या जातिह्रदत्ववान्

एवंसति अनाहार्य्यज्ञानीयविशिष्टविषयितात्वव्याप-
कताया एव विवक्षणीयत्वादिति ॥ ॥



ह्रद इत्याकारकज्ञानेन समानाकारत्वापत्तिर्दुर्वारैव नचैवमिष्टापत्तिः अनुभवविरोधादिति चेन्न। स्वनिरूपितविषयता-त्वावच्छिन्नेत्यादिकमपहाय स्वनिरूपकवृत्त्यनुव्यवसायत्वावच्छिन्नजन्यतानिरूपितजनकतावद्वृत्तित्वस्य निवेशात् तथा-च जातिह्रदत्ववान् ह्रद इत्याकारकज्ञानवृत्त्यनुव्यवसायत्वावच्छिन्नजन्यतानिरूपितजनकताया जातिमान् ह्रद इत्याका-रकज्ञानेऽभावेन सर्वं निर्मलमिति ध्येयम्।

नन्वत्रानाहार्य्यत्वाऽनिवेशेपि नासम्भवः अनियताहार्य्यविषयतायां स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वात् नियताहार्य्यविषयतामादायापि नासम्भवः आहार्य्यभेदनिवेशेऽप्येतत्कल्पेऽव्यापकविषयताशून्यत्वनिवेशनमावश्यकमन्यथा ह्रदे वह्नेः सामानाधिकरण्येन साध्यतास्थले जात्यवच्छेदेन वह्न्यभावावगाहिजातिमान्वह्न्यभाववानिति ज्ञानस्य ह्रदो जातिमानिति ज्ञानविशिष्टस्य प्रतिबन्धकतया तादृशज्ञानीयवह्न्यभाववद्ध्रदत्वात्मकजात्यवच्छिन्नविषयितायां प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेप्यवच्छेदकावच्छेदेन साध्यतास्थलीयसामानाधिकरण्येन दोषेऽव्याप्तिः सामाधिकरण्येन वह्न्यभावावगाहिनो जातिमान्वह्न्यभाववानिति ज्ञानस्य जातिमान् ह्रद इति ज्ञानविशि-

ष्टस्याप्रतिबन्धकत्वात् एवञ्च नियताहार्य्यज्ञाने दोषविषयित्वाव्यापकविषयिताशून्यत्वाभावादेव तदीय-
विषयिताव्यावृत्तेः। नच वह्निमान्ह्रदो वह्न्यभाववानित्याहार्य्येऽपि दोषविषयिताऽव्यापकविषयिता न
कापि विषयितेति वाच्यम्। यद्रूपावच्छिन्नविषयित्वावच्छिन्नयद्रूपावच्छिन्नविषयित्वं विशिष्टविषयित्वा-
ऽव्यापकं तद्रूपावच्छिन्नविषयित्वावच्छिन्नतद्रूपावच्छिन्नविषयित्वशून्यत्वस्याव्यापकविषयिताशून्यत्वप-
दार्थत्वात् उक्ताहार्य्येच संयोगावच्छिन्नविषयित्वावच्छिन्नह्रदत्वावच्छिन्नविषयिताया अव्यापकीभू-
तायाः सत्त्वेन तदसंग्रहात् विशेषणान्तरप्रक्षेपापेक्षयोक्तविशेषणपरिष्कारस्यौचित्यादिति चेन्न। ह्रदे-
स्वरूपतो भेदत्वसाधने भेदभेदवद्ध्रदरूपे बाधेऽव्याप्तेः तत्र भेदभेदवद्ध्रदो भेद इति नियताहार्य्यज्ञाने



यद्रूपावच्छिन्नविषयित्वावच्छिन्नयद्रूपावच्छिन्नविषयिता भेदभेदवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापिका ता-
दृशविषयितायाः कस्या अप्यभावात् यद्रूपावच्छिन्नविषयिताव्यापिकेत्यस्या अप्युक्तावपि भेदत्ववद्भे-
दभेदवद्ध्रदत्वावच्छिन्नविषयित्वाऽप्रसिद्ध्यैव तज्ज्ञानाऽवारणात् तत्रच दोषविषयितायास्सत्त्वात् भेदभे-
दवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नभेदत्वावच्छिन्नविषयितापि व्यापिकैव भेदत्वावच्छिन्नावच्छेदकता-
निरूपितविषयितायास्तादृशत्वात्। नचैवमपि यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता
तादृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वविवक्षणे
न तत्राव्याप्तिस्तादृशाहार्य्ये स्वरूपावच्छिन्नविषयतानिरूपितभेदभेदवद्ध्रदत्वावच्छिन्नाविशेष्यताख्य-

विषयतायाः भेदभेदवान्ह्रद इति ज्ञानेऽसत्त्वेन तदसंग्रहादिति वाच्यम्। भेदभेदेऽवृत्तित्वसाधने भेदभे-
दवति बाधेऽव्याप्तेस्तत्र तादृशदोषविषयतावति भेदत्वेन घटावगाहिनि भेदो भेदभेदवानिति नियताहा-
र्य्ये भेदभेदावच्छिन्नविषयिताव्यापिका यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता तस्याः
यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता तस्याश्चासत्त्वात् भेदो भेदभेदवानित्याहार्य्य-
ज्ञानीयाया भेदभेदत्वावच्छिन्नविषयतानिरूपिताया भेदत्वावच्छिन्नविषयतायाः स्वरूपत्वावच्छिन्नवि-
षयतायाश्च व्यापकत्वात् भेदभेदावच्छिन्नविषयतातु तादृशाहार्य्ये नास्त्येव भेदभेदवद्भेदत्वावच्छिन्न-

विषयिता त्वप्रसिद्धैव व्यधिकरणस्य निरूपकतानवच्छेदकत्वात् भेदभेदस्य निरूपकताव्यधिकरणत्वात् तथाच अनाहार्य्यत्वविशेषणमावश्यकमेवेति दिक् ॥ श्रीः ॥

यद्रूपावच्छिन्नविषयितासामान्यमित्यत्र सामान्यपदं व्यर्थमुक्तयुक्त्याऽव्यापकविषयिताशून्यत्वस्य निवेशनीयतया एकदेशेऽतिव्याप्तिविरहात् एकदेशविषयितायाः दोषविषयकज्ञानीयाया एव तादृशप्रतिबन्धकतावच्छेदकतया तस्य ज्ञानस्यैकदेशविषयित्वाऽव्यापकविशिष्टविषयितावत्त्वात् । नच गोत्वाभावो गोत्वाभाववानित्यत्र गोत्वाभावेऽतिव्याप्तिः गोत्वाभावो गोत्ववानिति ज्ञानीयगोत्वाभावविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् तत्रच ज्ञाने गोत्वाभावविषयिताऽव्यापकविषयिताया अस-

त्त्वात् सामान्यपदोपादाने गोत्वाभाव इति ज्ञानीयतद्विषयितायाः प्रतिबन्धकतानवच्छेदकतया न दोष इति वाच्यम्। यद्रूपावच्छिन्नविषयिता तादृशविशिष्टविषयिताऽव्यापिका तद्रूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षणीयतयोक्तदोषाभावात् तादृशोक्तप्रतिबन्धकज्ञाने गोत्वाभावत्वावच्छिन्नाविषयिताऽव्यापकगोत्वाभा-

---

१ गोत्वाभावत्वावच्छिन्नविषयिताऽव्यापकेत्यस्यायमाशयः गोत्वविशिष्टविषयिताऽव्यापिका यद्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नविषयताशून्यत्वमेवोपादेयम् । तत्रच गोत्वाभावत्वविशिष्टविषयित्वाधिकरणे गोत्वाभाव इत्याकारकज्ञाने गोत्वाभावत्वावच्छिन्नविषयितायाः असत्त्वादिति । ॥ ७७ ॥

२ वह्न्यभावनिष्ठावच्छेदकताकविषयताशून्यत्वस्य वन्ह्यभाववद्वन्हिः प्रमेय इति ज्ञानवृत्ति × २ ?

वत्वावच्छिन्नविषयतायाः सत्त्वेन तज्ज्ञानवारणात्। नचैवमपि वह्निर्वह्निमानित्यादौ वह्न्यभावाद्यवच्छिन्नेऽतिव्याप्तिः वह्न्यभावाद्यवच्छिन्नविषयित्वाऽव्यापकवह्न्यभाववद्वह्नित्वावच्छिन्नविषयिताशून्यत्वस्य दोषज्ञाने सत्त्वात्तदीयवह्न्यभावाद्यवच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् एवं ह्रदो जात्यभाववानित्यत्र बाधेऽव्याप्तिश्च उक्ताव्यापकविषयताशून्यत्वविशेषणेन जातिमज्ञातिमानिति ज्ञानावारणादिति वाच्यम्। यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता विशिष्टविषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वविवक्षणेनोक्तदोषवारणात् गोत्वाभावत्वावच्छिन्नविषयतानिरूपितसमवायावच्छिन्नविषयतायाः गोत्वाभावो गोत्ववानिति ज्ञाने सत्त्वात् एवं वह्निर्वह्न्यभाववानिति च

ज्ञाने वह्न्यभावावच्छिन्नविषयिताऽव्यापिका या वह्नित्वावच्छिन्नविषयितानिरूपितस्वरूपत्वावच्छिन्नविषयतायास्सत्त्वात् एवं जातिमाञ्जातिमानिति ज्ञानेच जातित्वावच्छिन्नविषयतानिरूपितजात्यवच्छिन्नविषयताया जातिमद्भेदत्वावच्छिन्नविषयित्वाऽव्यापिकायास्सत्त्वात् इति चेन्न। यत्र[1] स्वरूपे स्वरूपवद्भेदत्वं साध्यते तत्र स्वरूपवद्भेदत्ववद्भेदवत्स्वरूपं बाधः तत्र स्वरूपवद्भेदत्ववद्भेदवत्यातिव्याप्तिः तादृशभेदावच्छिन्नविषयित्वाऽव्यापिकायास्तादृशविषयतायाः प्रतिबन्धकीभूतदोषज्ञानेऽसत्त्वात्तज्ज्ञानीयतादृशभेदावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् यद्रूपावच्छिन्नविषयता तादृशविशिष्टविषयिताऽ-



१ एवमपि धर्मितया स्वरूपत्वेन पदार्थान्तरावगाहिबाधभ्रमविषये स्वरूपवद्भेदत्ववद्भेदवत्यतिव्याप्तिः ।

व्यापिका तद्रूपावच्छिन्नविषयिताशून्यत्वमपि निवेश्यं तादृशभेदावच्छिन्नविषयित्वाऽव्यापकाविशिष्ट-दोषविषयिताशून्यत्वस्य तादृशदोषज्ञानेऽभावेन तद्दोषवारणमिति चेद्गौरवमिति दिक् ॥ श्रीः ॥

यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तितादृशविशिष्टद्वयाघटितत्वे सतीति ॥

अत्र तादृशविशिष्टद्वयाघटितत्वं तादृशविशिष्टद्वयविषयताशून्यज्ञानविषयत्वं तच्च यदि तादृशविशिष्ट-विषयताशून्यत्वे सति तादृशविशिष्टविषयताशून्यज्ञानघटितं तदा वह्न्यभाववद्ध्रदादिरूपदोषासंग्रहः ह्रदो

वह्निमान्वह्निव्याप्यधूमवानिति समूहालम्बनानुमितिंप्रति वह्न्यभाववान्धूमाभाववान्वह्न्यभाववान्ह्रद इत्याकारकनिश्चयस्य प्रतिबन्धकतया तादृशप्रतिबन्धकतानतिरिक्तवृत्त्युक्तनिश्चयविशिष्टवह्न्यभाववद्ध्रदविषयकनिश्चयत्वमपीति वह्न्यभाववद्ध्रदविषयताशून्यत्वस्य ह्रदो वह्न्यभाववानिति ज्ञानेऽसत्त्वात् । नापि तादृशविशिष्टविषयित्वतादृशविशिष्टविषयित्वोभयाभाववज्ज्ञानघटितं तथासति ह्रदो वह्न्यभाववानिति ज्ञाने धूमाभाववह्न्यभाववत्त्वावच्छिन्नविषयित्वाऽभावेनोभयाभावसत्त्वात्तादृशदोषसंग्रहेऽपि ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यह्रदवृत्तिपङ्कजे धर्म्मितावच्छेदकविशेषणभावानापन्नवह्न्यभावव्याप्तिह्रदवृत्तित्वघटितविशिष्टेऽतिव्याप्तिः वह्न्यभावव्याप्यं पङ्कजं पङ्कजवान्ह्रद इति ज्ञानयोरिव वह्न्यभावव्याप्यं



पङ्कजं ह्रदवृत्ति पङ्कजमिति ज्ञानयोरपि ज्ञानविशिष्टज्ञानत्वेन ह्रदे वह्न्यनुमितिप्रतिबन्धकतया वह्न्यभावव्याप्तिह्रदवृत्तित्वोभयमेकत्र द्वयमिति रीत्याऽवगाहमानवह्न्यभावव्याप्तिह्रदवृत्तित्ववत्पङ्कजामिति ज्ञाने विशेष्यतया ऐक्येन विषयिताद्वयशून्यत्वस्य सत्त्वात् तत्रच वह्न्यभावव्याप्तिप्रकारतानिरूपितपङ्कजत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टह्रदवृत्तित्वप्रकारतानिरूपितपङ्कजत्वावाच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः प्रकृतानुमितिनिरूपितायाः सत्त्वात् किंतु तादृशाविशिष्टविषयताविशिष्टतादृशविशिष्टविषयताशून्यज्ञानाविषयत्वम् अत्र प्रथमानिश्चयत्वानिवेशे जलवान्वह्न्यभाववान्न वेति ज्ञानविशिष्टजलवान्ह्रद इति निश्चये प्रतिबन्धकताविरहेण द्वितीये तदनिवेशे जलवा-

न्वह्न्यभाववानिति निश्चयविशिष्टह्रदो जलवान्न वेति ज्ञानेच प्रतिबन्धकताविरहेण तादृशविशिष्टद्वय-
स्य यादृशविशिष्टपदेन धर्तुमशक्यतया वह्न्यभाववज्जलवत्कालीनघटजलवद्ध्रदकालीनघटादिकमेव ता-
दृशविशिष्टद्वयं तत्रोभयत्र निश्चयत्वानिवेशेपि विशिष्टवैशिष्ट्यबुद्धौ विशेषणांशे संशयास्वीकारेण
तादृशविशिष्टद्वयविषयकज्ञाने कालीनत्वांशे संशयात्मकेपि जलवत्त्वादिविशिष्टांशे वह्न्यभावादिसं-
शयात्मकत्वाभावेन प्रकृतानुमितिप्रतिबन्धकतासत्त्वात् तादृशविशिष्टद्वयविषयिताशून्यत्वस्योक्तविशि-
ष्टविषयकज्ञाने सत्त्वेन तत्रातिव्याप्त्यापत्तिरत उभयत्र निश्चयत्वनिवेशनम् । नन्वत्र निश्चयत्वनिवे-
शेपि जातिमत्वान्वह्न्यभाववान्जलवान्ह्रद इति निश्चययोर्ज्जलवान्वह्न्यभाववान्जातिमत्वान्ह्रद इति नि-

श्चययोश्च प्रकृतानुमित्यप्रतिबन्धकतया तादृशविशिष्टद्वयाप्रसिद्धिनिबन्धनासम्भववारणायोभयत्र नि-
श्चयेऽव्यापकविषयताशून्यत्वं निवेशनीयम् तथाच निश्चयत्वाऽनिवेशेपि जलवान्वह्न्यभाववान्न वा ह्रदो
जलवान्न वेति संशययोर्वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकवह्न्यभावाभावत्वावच्छिन्नविषयिता-
जलवद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकाभावत्वावच्छिन्नविषयित्वाश्रययोर्वारणसम्भवेन तादृशविशिष्टद्वय-
स्य यादृशविशिष्टपदेन धर्तुं शक्यतया तत्रातिव्याप्तिविरहेणोभयत्र निश्चयत्वनिवेशवैय्यर्थ्यमिति चेन्न।
अव्यापकाविषयताशून्यत्वनिवेशेपि प्रथमनिश्चयत्वाऽनिवेशे वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वा-
व्यापकविषयिताशून्यस्य जलवान्वह्निमान्न वेति संशयस्यावारणात्तादृशसंशयविशिष्टजलवान्ह्रद इति

निश्चयस्याऽप्रतिबन्धकतया यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यतया तत्रातिव्याप्त्यापत्तेः द्वितीये निश्चयत्वाऽनिवेशे वह्न्यभाववत्तेजोभाववद्वृत्तितेजोभाववद्ध्रदेतिव्याप्तिर्वह्न्यभाववान् तेजोभाववानिति निश्चयविशिष्टस्य ह्रदस्तेजःस्वी न वेति संशयस्य तेजोभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यस्यानुमित्यप्रतिबन्धकतया यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यत्वात्।नच यादृशविशिष्टविषयित्वाऽव्यापिका यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वमुभयत्राऽव्यापकविषयताशून्यत्वमित्यनेन विवक्षणीयम् तथाच जलवान्वह्निमान्न वेत्याकारकसंशये वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाऽव्यापिकायाः संयोगत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयतायाः सत्त्वेन ह्रदस्तेजःस्वी न वेति संशयेच तेजोभाववद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापिकायाः संयोगत्वावच्छिन्नविषयतानिरूपिततेजस्त्वावच्छिन्नविषयतायास्सत्त्वेन चोक्तसंशययोर्वारणाद्यादृशपदेन तादृशविशिष्टद्वयस्य धर्तुं शक्यतया तयोरतिव्याप्तिविरहेणोभयत्र निश्चयत्वांशो व्यर्थ इति वाच्यम् । ह्रदो भेद इत्यत्र भेदभेदवदभावभेदवद्वृत्त्यभावभेदवद्ध्रदेऽतिव्याप्तेः उक्ताव्यापकविषयताशून्यत्वविशेषणेनाभावभेदवान्भेदो न वेत्याकारकस्य स्वरूपतो भेदत्वभेदभेदकोटिकसंशयस्यावारणात्तत्र भेदभेदवदभावभेदवत्त्वावच्छिन्नविषयित्वाव्यापकीभूतायाः कस्या अपि तादृशविषयताया अभावात् एवं ह्रदोऽभावो न वेत्याकारकस्य स्वरूपतोऽभाव-

त्वाभावभेदकोटिकसंशयस्य वारणं न संभवति तत्राभावभेदवद्धद्त्वावच्छिन्नविषयित्वाव्यापिकाया-
स्ताद्दशविषयताया असत्त्वात् तथाचैताद्दशैकतरसंशयापरनिश्चययोर्ह्नदो भेद इत्यनुमित्यप्रतिबन्धकत्वेन
याद्दशविशिष्टपदेन ताद्दशविशिष्टद्वयस्य धर्तुमशक्यत्वादत उभयत्र निश्चयत्वनिवेश आवश्यकः॥ तथा-
च याद्दशविशिष्टविषयकत्वाऽव्यापकविषयिताशून्ययाद्दशविशिष्टविषयकनिश्चयविशिष्टयाद्दशविशिष्टवि-
षयकत्वाऽव्यापकविषयिताशून्ययाद्दशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिता-
द्दशविशिष्टविषयिताविशिष्टताद्दशविशिष्टविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशू
न्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता त-

द्रूपवत्त्वं लक्षणम्। अत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे ह्रदो वह्निमान् जलादित्यादौ वह्निव्यापकी-
भूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः तत्र वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकता-
दृशजलत्वविशिष्टविषयकनिश्चयविशिष्टजलवान्ह्रद इत्याकारकजलत्वविशिष्टविषयकनिश्चयत्वे प्रकृतानु-
मितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य सत्त्वाद्वह्निव्यापकीभूताभावप्रतियोगिजल-
त्वविशिष्टविषयताविशिष्टजलत्वविशिष्टविषयताशून्यज्ञानविषयत्वस्य तादृशासाधारण्येऽसत्त्वादतोऽनति-
रिक्तवृत्तित्वनिवेशः तथासति वह्निव्यापकीभूताभावप्रतियोगि जलमित्याकारकनिश्चयविशिष्टजलमिति
निश्चये प्रतिबन्धकत्वासत्त्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयं न धर्तुं शक्यत इति नाव्याप्तिः।

नन्वत्रानतिरिक्तवृत्तित्वनिवेशपक्षेपि तादृशनिश्चयद्वयेप्यव्यापकविषयिताशून्यत्वं निवेशनीयमन्यथा तादृशविशिष्टद्वयाऽप्रसिद्ध्याऽसम्भवापत्तेः एवञ्चसति वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकनिश्चयविशिष्टस्य जलवान्ह्रद इत्याकारकनिश्चयस्य प्रतिबन्धकत्वेपि तत्र जलत्वावच्छिन्नविषायित्वाव्यापकविषयिताशून्यत्वाभावेन तादृशाव्यापकविषयिताशून्यस्य शुद्धजलमित्याकारकनिश्चयस्याऽसाधारण्यविषयकनिश्चयविशिष्टस्यानुमित्यप्रतिबन्धकतया न तादृशविशिष्टद्वयमादायाव्याप्तिः । नच जलं वह्निमज्जलादित्यत्रासाधारण्येऽव्याप्तिस्तत्र तादृशासाधारण्यविषयकनिश्चयविशिष्टजलं जलवदित्याकारकनिश्चयत्वे प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वात् तत्रच जलत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वस्यापि सत्त्वात् अनतिरिक्तवृत्तित्वनिवेशेऽसाधारण्यनिश्चयविशिष्टजलमिति निश्चये प्रतिबन्धकताविरहान्न दोष इति वाच्यम् । यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता यादृशविशिष्टविषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयताशून्ययादृशविशिष्टविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता यादृशविशिष्टविषयकत्वाऽव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्ययादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टद्वयाऽघटितत्वनिवेशे नोक्तदोषः तत्राऽसाधा-

रण्यनिश्चयविशिष्टजलं जलवदित्याकारकनिश्चये जलत्वावच्छिन्नविषयित्वाऽव्यापकीभूतजलत्वाद्यवच्छिन्न-विषयतानिरूपितजलत्वाद्यवच्छिन्नविषयतायाः सत्त्वात्तच्छून्यजलमित्याकारकनिश्चयस्यानुमित्यप्रतिबन्ध-कत्वात्। नच जलवज्जलं स्वरूपवज्जलवज्जलकालीनवह्निमत् स्वरूपवज्जलादित्यत्रासाधारण्येऽव्याप्तिस्तादृ-शविवक्षायामपि दुर्निवारा अत्र पक्षे जलं स्वरूपसम्बन्धेन प्रविष्टं स्वरूपवज्जलवज्जलकालीनवह्निव्यापकी-भूताऽभावप्रतियोगिस्वरूपवज्जलमित्याकारकाऽसाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलवज्जलत्ववि-

१ जलवान् घट इत्याकारकज्ञानान्तर्भावेणाऽव्यापकत्वं बोध्यम्।

शिष्टविषयताशालिस्वरूपवज्जलवज्जलवज्जलमिति निश्चयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकतया तादृशासाधारण्यात्मकविशिष्टस्वरूपवज्जलवज्जलत्वविशिष्टयोर्यादृशविशिष्टपदेन धर्तुं शक्यतया तादृशविशिष्टद्वयाघटित्वस्यासाधारण्येऽभावात् अनतिरिक्तवृत्तित्वनिवेशेतु तादृशासाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलवज्जलमित्याकारकानिश्चये तादृशप्रतिबन्धकत्वाऽभावेनैतादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्तुमशक्यतया नाव्याप्तिरिति वाच्यम् । स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षेपि यादृशवि-

१ वस्तुतः परस्परविषयताशून्यत्वस्य निश्चयेऽवश्यं निवेशनीयतया तेनैवासाधारण्येऽव्याप्तिशङ्कैव नास्ति उक्तविशिष्टद्वयस्य धर्तुमशक्यत्वात् ।

शिष्टविषयित्वाऽव्यापिका यद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयतानिरूपितयद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयता तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयतानिरूपिततद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयताशून्यत्वस्य विवक्षणीयतयोक्ताव्याप्तेरभावात् तादृशासाधारण्यविषयकनिश्चयविशिष्टस्वरूपवज्जलवज्जलवज्जलमिति निश्चयेऽनुमितिप्रतिबन्धके स्वरूपवज्जलवज्जलत्वावर्च्छिन्नविषयित्वाऽव्यापिका या जलवज्जलत्वनिष्ठधीविशेषविषयत्वरूपसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकजलवज्जलत्वावच्छिन्नविशेष्यतानिरूपितस्वरूपवज्जलत्वनिष्ठधीविशेषविषयत्वरूपसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकप्रकारता-



यास्सत्त्वेन तच्छून्यस्वरूपवज्जलवज्जलमित्याकारकनिश्चये प्रतिबन्धकताविरहेण तादृशविशिष्टस्य यादृशविशिष्टपदेन धर्तुमशक्यत्वात्। यत्तु केनचिदुक्तं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे नीलोत्पलवान् ह्रदो रक्तदण्डवानित्यत्र बाधेऽव्याप्तिः समानविषयकप्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकतया निलोत्पलवान्ह्रदो रक्तदण्डवानिति प्रत्यक्षसामग्र्यास्तादृशानुमितिप्रतिबन्धकत्वेन तादृशप्रत्यक्षस्यच ह्रदांशे नीलत्वविशिष्टोत्पलस्य रक्तविशिष्टदण्डस्यच वैशिष्ट्यावगाहितया तत्सामग्रीकुक्षौ नीलमुत्पलं रक्तो दण्ड इत्याकारकनिश्चययोर्विशेषणतावच्छेदकप्रकारकनिश्चयमुद्रया प्रवेशात्सामग्र्या अप्येकविशिष्टापरत्वेनैव प्रतिबन्धकत्वस्य वक्तव्यतया नीलोत्पलत्वविशिष्टविषयकनिश्चयविशिष्टरक्तदण्डत्ववि-

शिष्टविषयकनिश्चयत्वस्य तादृशानुमितिप्रतिबन्धकतावच्छेदकतया तादृशविशिष्टद्वयाऽघटितत्व-स्योक्तबाधेऽसत्त्वात् अनतिरिक्तवृत्तित्वनिवेशे चक्षुःसंयोगाऽकालीनतादृशनिश्चययोः प्रतिबन्धकत्वाभा-वेन तादृशविशिष्टयोर्यादृशविशिष्टपदेन धर्तुमशक्यत्वान्न दोष इति। तदसत्। सामग्रीनिष्ठतादृशा-नुमितिप्रतिबन्धकतावच्छेदककुक्षौ तादृशनिश्चयद्वयस्यानिवेशेन तादृशनिश्चयत्वे प्रतिबन्धकतावच्छेद-

१ ननु साक्षात्प्रतिबन्धकस्य निरुक्तनिश्चयद्वयस्य प्रतिबन्धकतावच्छेदककुक्ष्यन्तर्गतत्ववर्णनमसंगतमिति चेन्न। सामग्रीत्वस्यैकविशिष्टापररूपत्वेन तत्रच निरुक्तनिश्चयद्वयस्य विशिष्टसामग्रीशरीरे विशेषणत्वात्। नच विशेषणत्वे प्रति-बन्धकत्वाभावाद्विशिष्टद्वयपदेन धर्तुमशक्यत्वं तस्येति वाच्यम्। सामग्र्यन्तरापेक्षया तस्य विशेष्यत्वादिति ध्येयम्।

कत्वाभावात् । नच सामग्रीप्रतिबन्धकतायां तादृशनिश्चयाऽनिवेशे तादृशनिश्चयाभावदशायामपरप्रत्यक्षकारणसत्त्वेऽनुमितिर्न स्यादिति वाच्यम् । तादृशानुमितिंप्रत्यपि विशेषणतावच्छेदकप्रकारकनिर्णयविधया तादृशनिश्चययोरपि कारणत्वेन तदभावे तदनुत्पादस्येष्टत्वात् । यत्तु केनचिदुक्तं चिकीर्षा-

१ पूर्वस्थले नीलोत्पलवद्ध्रदकालीनरक्तदण्डबद्ध्रदकालीनजलहेतुस्थलेऽव्याप्तिं परित्यज्य स्थलान्तरानुधावनं व्यर्थमितितु भ्रमः समाने विषयेऽनुमितिंप्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वस्य सिद्धान्तसिद्धत्वात् साध्यशरीरे निवेशेतु आचार्यपादोक्तदोषो दुर्द्धर एव प्रकृतस्थलेच चिकीर्षासामग्र्या अनुमितिमात्रविरोधित्वेन साध्यशरीरे निवेशे बीजाभावः तथाचान्यहेतुकानुमितिसामग्रीसत्त्वे फलेच्छादिघटितसामग्रीमात्रसत्त्वे कृतिसाध्यत्वादिज्ञानाभा-

सामग्र्या अनुमितिप्रतिबन्धकतामते ह्रदः कृतिसाध्यतावदिष्टसाधनतावत्पाककालीनवह्निमान्धूमादित्यत्र बाधेऽव्याप्तिः तत्र तादृशचिकीर्षासामग्रीनिष्ठानुमितिप्रतिबन्धकतावच्छेदककुक्षौ कृतिसाध्यतावत्पाकेष्टसाधनतावत्पाकविषयकनिश्चययोः प्रवेशेन तादृशविशिष्टद्वयाघटितत्वस्य तत्रत्यबाधेऽभावात् अनतिरिक्तवृत्तित्वनिवेशे फलेच्छाऽकालीनतादृशनिश्चययोः प्रतिबन्धकताविरहेण न दोष इति तदपि न, प्रागुक्तरीत्यैव तादृशानुमितिप्रतिबन्धकतावच्छेदककुक्षौ तादृशनिश्चययोरप्रवेशादिति चेन्न । ह्रदो

वेच सत्त्वेऽनुमितिरनुभूयते सा न स्यात् कृतिसाध्यत्वज्ञानादिव्यतिरिक्तप्रतिबन्धकसत्त्वादिति विभावयन्तु तर्कनिपुणाः ।



वह्निमानिष्टसाधनतावत्कृतिसाध्यतावत्पाककालीनजलादित्यत्रासाधारण्येऽव्याप्त्यापत्तेः तादृशस्थलीयानुमितिनिरूपितचिकीर्षासामग्रीनिष्ठप्रतिबन्धकतावच्छेदककुक्षौ तादृशनिश्चययोरप्यवश्यं निवेशनीयत्वात् अन्यथा तादृशनिश्चयाभावकाले फलेच्छादिसत्त्वे लिङ्गान्तरपरामर्शादपि तादृशानुमित्यनापत्तेः तथाच कृतिसाध्यतावत्पाकस्येष्टसाधनतावत्पाकस्यच यादृशविशिष्टपदेन धर्तुं शक्यतया तदघटितत्वस्योक्तहेतुतावच्छेदकावच्छिन्नहेतुघटिताऽसाधारण्येऽसत्त्वात् अनतिरिक्तवृत्तित्त्वनिवेशेतु फलेच्छाऽकालीनतादृशविशिष्टविषयकनिश्चययोः प्रतिबन्धकत्त्वाभावेन यादृशविशिष्टपदेन तद्वारणासम्भवान्नाव्याप्तिरिति । यादृशविशिष्टविषयित्वाव्यापकविषयिताशून्ययादृशविशिष्टविषयताशालिनिश्चयविशिष्टतादृशया-

शत्रिशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिताद्दशविशिष्टद्वयविषयिताशून्याव्यापकवि-
षयिताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं
लक्षणम् अत्र यत्किंचित्प्रतिबन्धकतानतिरिक्तवृत्तित्वनिवेशे ह्रदो गगनाभाववद्वह्न्यधिकरणनिरूपितत्व-
वत्कालीनवह्निमान् जलादित्यत्र गगनाभाववद्वह्न्यधिकरणनिरूपितत्ववत्कालीनवह्निव्यापकीभूताभाव-
प्रतियोगिजलरूपासाधारण्येऽव्याप्तिः तत्र व्यापकताशरीरे वृत्तित्वांशे वह्न्यधिकरणनिरूपितत्वस्य
प्रविष्टतया ताद्दशासाधारण्यस्य गगनाभाववद्वह्न्यधिकरणनिरूपितत्ववत्त्वविशिष्टवह्न्यधिकरणनिरूपि-
तत्ववद्वृत्तितात्वविशिष्टात्मकविशिष्टद्वयघटिततया वह्न्यधिकरणनिरूपितत्ववान् गगनाभाववानि-

ति निश्चयविशिष्टवह्न्यधिकरणनिरूपितत्ववद्वृत्तित्वमिति निश्चयत्वस्य वृत्तित्वं गगनवदित्य-
नुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानातिरिक्तवृत्तितया तदघटितत्वस्य तत्राभावात्
अतः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपकप्रतिबन्धकतानतिरिक्तवृत्तित्वमेव तद्घटकं वाच्यम् ।
नन्वेवमपि गगनवानभावो गगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तित्ववत्कालीनवह्निमान् जलादित्यत्रा-
साधारण्येऽव्याप्तिः वह्न्यधिकरणनिरूपितवृत्तित्ववान् गगनाभाववान् वह्न्यधिकरणनिरूपितवृत्तित्व-
वानभाव इति निश्चयविशिष्टनिश्चयत्वस्य प्रकृतानुमितित्वव्यापकाभावत्वावच्छिन्नविशेष्यकगगनत्वाव-
च्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्ट-

द्वयाघटितत्वस्य तादृशासाधारण्येऽभावात् असाधारण्यघटकव्यापकताघटकाभावे वह्न्यधिकरणनिरूपितवृत्तित्वस्य प्रविष्टत्वादिति चेन्न । विशेष्यदले यादृशप्रतिबन्धकता प्रविष्टा तादृशप्रतिबन्धकताया एव प्रवेशनीयत्वात् तथाच किंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्प्रतिबन्धकता तत्प्रतिबन्धकतानातिरिक्तवृत्तियादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तादृशविशिष्टद्वयविषयिताशून्यज्ञानविषयतद्रूपावच्छिन्नत्वं लक्षणम् पक्षधर्मिकहेतुमत्ताज्ञानकालीनाऽसाधारण्यविषयकनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकपक्षे विशिष्टसाध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता प्रकृतासाधारण्यघटकविशिष्टद्वयविषयकनिश्चयत्वव्यापिका पक्षे पक्षतावच्छेदकावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतेति तत्राव्याप्तिविरहात् । नचैवं सति बाधादावव्याप्तिः बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकताया ज्ञानवैशिष्ट्यानवच्छिन्नतया तदवच्छिन्नावच्छेदकधर्मदर्शनप्रतिबन्धकतातो भिन्नतया यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं बाधप्रतिबन्धकतानातिरिक्तवृत्तितादृशविशिष्टद्वयाप्रसिद्धेरिति वाच्यम् । वक्ष्यमाणानुगमेन सर्वदोषसंग्रहात् तत्प्रकारश्च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं रूपे प्रतिबन्धकतावैशिष्ट्यञ्च स्वनिष्ठकिंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्च-

यनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगि[2]तानिरूपितावच्छेद[1]क-
तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छेदक[6]तानिरूपितावच्छि-
न्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन अभा-
वप्रतियोगितावच्छेदकसम्बन्धश्च स्वनिष्ठो यः किंचिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्याकिं-
चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्याकिंचिद्रूपा-



१ अवच्छेदकतायाम् । २ प्रतियोगितायाम् । ३ भेदे । ४ वृत्तित्वे । ५ निश्चये । ६ विषयितायाम् ।

वच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो योऽभावस्तन्निरूपितप्रति[1]योगितानिरूपितावच्छेद[2]कतानिरूपितावच्छेद[3]कतानिरूपितावच्छेद[4]कतानिरूपितावच्छेदक[5]-ताविशिष्टविषयितारूपः विषयितायामवच्छेदकतावैशिष्ट्यञ्च स्वविशिष्टरूपावच्छिन्नत्व-स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन प्रथमसम्बन्धघटकरूपे स्ववैशिष्ट्यञ्च स्वनिरूपितावच्छेद[6]कतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितावच्छेद[7]कतानिरूपिता-

१ अवच्छेदकतायाम्। २ प्रतियोगितायाम्। ३ भेदे। ४ वृत्तित्वे। ५ निश्चये। ६ विषयितायाम्। ७ शून्यत्वे।

वच्छेदकं[1]तानिरूपितावच्छेदकं[2]तानिरूपितावच्छेदकं[3]तानिरूपितावच्छेदकं[4]तानिरूपितावच्छेदकं[5]तानिरू-
पितावच्छेदकतानिरूपितावच्छेदकँ[6]तानिरूपितावाच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन
द्वितीयरूपे स्ववैशिष्ट्यञ्च स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदर्कं[7]तावत्त्वसम्बन्धेन तादृ-
शावच्छेदकतावत्त्वं च स्वनिरूपितावच्छेदकं[8]तानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-
स्वनिरूपितावच्छेदकं[10]तानिरूपितावच्छेदकं[11]तानिरूपितावच्छेदकं[12]तानिरूपितावच्छेदकं[13]तानिरूपितावच्छे-

१ विषयितायाम् । २ अवच्छेदकत्वे । ३ प्रतियोगित्वे । ४ भेदे । ५ वृत्तित्वे । ६ अधिकरणे । ७ विषयित्वे । ८ निश्चये । ९ विषयित्वे । १० शून्यत्वे । ११ विषयित्वे । १२ अवच्छेदकत्वे । १३ प्रतियोगित्वे ।



दकं[1]तानिरूपितावच्छेदकं[2]तानिरूपिताऽवच्छेदकं[3]तानिरूपितावच्छेदकं[4]तानिरूपितावच्छिन्नत्वसम्बन्धाव-
च्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन तथाच प्रतिबन्धकतानिरूपिततादृशाभावीयप्रतियोगितां[5]निरूपि-
तावच्छेदर्कं[6]तानिरूपितावच्छेदकँ[7]तानिरूपितावच्छेदर्कं[8]तानिरूपितावच्छेदकं[9]ताविशिष्टविषयिताकज्ञानवै-
शिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सम्बन्धः तादृशप्रतिबन्धकतायामेवोक्ताभावस्य सत्त्वात् तादृश-
सम्बन्धेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चये तादृशनिश्चयनिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रति-

१ भेदे । २ वृत्तित्वे । ३ अधिकरणे । ४ विषयित्वे । ५ अवच्छेदकत्वे । ६ प्रतियोगित्वे । ७ भेदे । ८ वृत्तित्वे । ९ निश्चये ।

बन्धकतायाः सत्त्वेन तदभाववती प्रतीतिस्तादृशविशिष्टाविषयकैव तन्निष्ठविषयितानिरूपकतावच्छेदक-त्वस्योक्तरूपेऽभावेन नातिव्याप्तिः बाधप्रतिबन्धकतायास्तादृशसम्बन्धस्य व्यधिकरणसम्बन्धतया तेन सम्बन्धेन तदभाववान् बाधविषयकनिश्चय इति तन्निष्ठविषयितानिरूपकतावच्छेदकत्वस्य बाधतावच्छेदकरूपे सत्त्वेन प्रागुक्तप्रथमसम्बन्धस्यच सत्त्वेन लक्षणसमन्वयः। अथैवमपि बाधाद्यसंग्रहः बाधबुद्धित्वावच्छिन्नप्रतिबन्धकतायामपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयिताऽव्यापक-विषयिताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्ती-

ति प्रतीतिसिद्धाभावस्य सत्त्वेन तन्निरूपितप्रतियोगितया परम्परया निरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयिताया बाधविषयकज्ञानेपि सत्त्वेन तादृशसम्बन्धेन तदभाववती प्रतीतिर्बाधाऽविषयिकैवेति वह्न्यभाववद्ध्रदत्वे तन्निष्ठविषयितानिरूपकतावच्छेदकत्वाभावादिति चेन्न । द्वितीयसम्बन्धघटकस्वाभावस्य स्वविशिष्टावच्छेदकताविशिष्टविषयितासम्बन्धावच्छिन्नप्रतियोगिताकस्य विवक्षणात् अवच्छेदकतायां स्ववैशिष्ट्यञ्च स्वनिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपाव-

च्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रति[1]यो-
गितानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपिताऽवच्छेदक[4]तानिरूपितत्वस्वातिरिक्तवृत्तिविष-
यितानिरूपकतावच्छेदकतासमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदक[5]तानिरूपकनिरूपकता-
सम्बन्धावच्छिन्नावच्छेदक[6]तानिरूपकत्वस्वातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वसमानाधिकरणा-
वच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपकनिरूपकतासंबन्धावच्छिन्नावच्छेदकतानिरूपकसामानाधि-

१ अवच्छेदकत्वे । २ प्रतियोगित्वे । ३ भेदे । ४ वृत्तित्वे । ५ धर्मे । ६ विषयितायाम् ।



करण्यसंबन्धावच्छिन्नावच्छेदकतानिरूपकत्वैतत्त्रितयसंबन्धेन शेषं पूर्ववदेव तथाच बाधप्रतिबन्धकतायां
वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्च-
यनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्य सत्त्वेपि तादृशाभावीयप्रतियोगि-
तानिरूपितनिश्चयनिष्ठावच्छेदकताच न तादृशसम्बन्धत्रयेण प्रतिबन्धकताविशिष्टा तत्र प्रथमसम्ब-
न्धसत्त्वेप्यन्यसम्बन्धयोरभावात् ता[1]दृशावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छि-

१ तादृशावच्छेदकतानिरूपितविषयितानिष्ठेत्यादिना बाधप्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य
वह्न्यभाववद्ध्रदत्वेऽभावादसम्भवो वारितः । नन्वत्र संशयाहार्याद्यन्तर्भावेण प्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपक-

तावच्छेदकत्वेनाऽसंभवस्तदवस्थ एव । नच स्वाभाववदनाहार्य्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तिविषयितानिरूपकता- वच्छेदकत्वोपादाने नाऽसंभव इति वाच्यम् । भाविज्ञानं वह्न्यभावाभाववति वह्न्यभावप्रकारताकमित्याकारकज्ञान- द्वितीयक्षणे अपेक्षाबुद्ध्यात्मकबाधनिश्चयः तत्रच पूर्वक्षणावच्छेदेन प्रतिबन्धकत्वाभावविशिष्टद्वितीयक्षणावच्छि- न्ननिरुक्तविशेषणविशिष्टनिश्चयीयविषयितानिरूपकतावच्छेदकत्वादिति चेन्न । स्वाऽव्यापकतत्कत्वरूपस्य स्वातिरिक्तवृ- त्तित्वस्य निवेशात् प्रकृतेच अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नं- विषयतायाः स्वपदेन धारणे स्वाऽव्यापकप्रतिबन्धकतारूपस्वातिरिक्तवृत्तित्वाऽभावात् असंग्राह्यस्थलेच वह्न्यभा- ववज्जलवत्त्वादौ तत्सत्त्वात्सर्वं समञ्जसमिति निर्मत्सरा विभावयन्तु ।

न्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वनिष्ठस्य तादृशप्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतासमानाधिकरणत्वाभावात् । एवमेव सम्बन्धान्तरेपि ज्ञेयं तथाच अवच्छेदकधर्मदर्शननिष्ठप्रतिबन्धकतावृत्तियों निरुक्ताभावस्तन्निरूपितप्रतियोगितानिरूपितानिश्चयनिष्ठाऽवच्छेदकतायामेव तादृशप्रतिबन्धकतावैशिष्ट्यमस्ति तत्र तादृशप्रतिबन्धकताशून्यजलवान्ह्रद इति निश्चयनिष्ठविषयितानिरूपकतावच्छेदकत्वसमानाधिकरणजलवद्ध्रदत्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकत्वस्य तादृशावच्छेदकत्वसमानाधिकरणवह्न्यभाववज्जलवत्त्वानिष्ठावच्छेदकतानिरूपकविषयितानिष्ठावच्छेदकतानिरूपकनिश्चयानिष्ठावच्छेदकतानिरूपकत्व-

स्य प्रथमसम्बन्धस्यच सत्त्वात् तादृशावच्छेदकताविशिष्टविषयिताच बाधप्रतिबन्धकताया व्यधिकरणसम्बन्ध एवेति नोक्तदोषः । वस्तुतो द्वितीयसम्बन्धघटकस्वाभावप्रतियोगितावच्छेदकसम्बन्धः स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयाविशिष्टकिञ्चिद्रूपावच्छिन्नविषयिताऽव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगिं[1]तानिरूपितावच्छेदकें[2]तानिरूपितावच्छे-

१ अवच्छेदकत्वे । २ प्रतियोगित्वे ।

दकें[1]तानिरूपितावच्छेदकें[2]तानिरूपितावच्छेदकें[3]ताविशिष्टविषयितैव विषयितायामवच्छेदकतावैशिष्ट्यं च स्वविशिष्टरूपावच्छिन्नत्व-स्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन प्रथमरूपे स्ववैशिष्ट्यंच स्वनिरूपितावच्छेदकें[4]तानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितावच्छेदकें[5]तानिरूपितावच्छेदकें[6]तानिरूपितावच्छेदकें[7]तानिरूपितावच्छेदकें[8]तानिरूपितावच्छेदकें[9]तानिरूपितावच्छेदकें[10]तानिरूपितावच्छेदकें[11]तानिरूपिताऽवच्छेदकें[12]तानिरूपितावच्छिन्नत्वसम्ब-

१ भेदे । २ वृत्तित्वे । ३ निश्चये । ४ विषयितायाम् । ५ शून्यत्वे । ६ विषयितायाम् ।
७ अवच्छेदकत्वे । ८ प्रतियोगित्वे । ९ भेदे । १० वृत्तित्वे । ११ अधिकरणे । १२ विषयितायाम् ।

न्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदक[1]तानिरूपितावच्छेद-क[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छिन्नत्वसम्बन्धावाच्छिन्नावच्छेदकतावत्त्वैतात्त्रितयसंबन्धेन द्विती-यरूपे स्ववैशिष्ट्यंच स्वनिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छिन्नत्वसम्बन्धावच्छि-न्नावच्छेदकतावत्त्व-स्वनिरूपितसामानाधिकरण्यसंबन्धावाच्छिन्नावच्छेदक[6]तावत्त्वोभयसंबन्धेन तादृशा-वच्छेदकतावत्त्वंच स्वनिरूपितावच्छेदक[7]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरू-

---

१ निश्चये । २ शून्यत्वे । ३ विषयितायाम् । ४ शून्यत्वे । ५ विषयितायाम् । ६ निश्चये । ७ विषयितायाम् ।

पितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]ता-
निरूपिताव[6]च्छेदकतानिरूपिताऽवच्छेद[7]कतानिरूपितावच्छेद[8]कतानिरूपितावाच्छिन्नत्वसंबन्धावच्छिन्नाव-
च्छेदकत्वोभयसंबन्धेन एवंच बाधप्रतिबन्धकतायां वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकविष-
यिताशून्यवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशून्यवह्न्यभाववद्ध्रदत्वावाच्छिन्नविषयिताशालिनिश्चयावि-
शिष्टताद‍ृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावो नास्त्येव ताद‍ृशनिश्चयस्यै

---

१ शून्यत्वे । २ विषयितायाम् । ३ अवच्छेदकत्वे । ४ प्रतियोगितायाम् । ५ भेदे । ६ वृत्तित्वे । ७ अधिकरणे । ८ विषयितायाम् ।

वासिद्धत्वात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयनिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायांतु
वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यजलवद्ध्रदत्वावच्छिन्नविषयिताशून्यवह्न्यभा-
ववज्जलवत्त्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषायिताशून्यव-
ह्न्यभाववज्जलवत्त्वावच्छिन्नविषयिताशून्यजलवद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगिता-
वच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावो वर्तत इति तादृशाभावीयप्रतियोगितानिरूपितनिश्चयनिष्ठा-
वच्छेदकताविशिष्टरूपम् उक्तसंबन्धत्रयेण जलवद्ध्रदत्वं वह्न्यभाववज्जलवत्त्वंचेति तादृशैकरूपावच्छिन्न-
विषयितासमानाधिकरणापररूपावच्छिन्नविषयितायास्तादृशविशिष्टविषयकनिश्चये सत्त्वेन नाऽव्याप्त्य-

तिव्याप्ती इति एवं स्वरूपसंबन्धरूपावच्छेदकत्वपक्षेपि अनुगमः शक्यः तथाहि प्रकृतानुमितित्व-
व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम् प्रतिबन्धकतावैशिष्ट्यंच प्रागुक्तोभ-
यसंबन्धेन द्वितीयसंबन्धघटकाभावप्रतियोगितावच्छेदकसंबन्धश्च स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयितावि-
शिष्टकिंचिद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावत्त्वरूपः तादृशनिरूपकता-
याः स्ववृत्तित्वंच स्वविशिष्टनिश्चयीयविषयितानिष्ठस्वरूपसंबन्धरूपावच्छेदकतानिरूपकत्वसंबन्धेन नि-
श्चये निरूपकतावैशिष्ट्यंच स्वनिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्व-स्वनिरूपित-
सामानाधिकरण्यसम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मव-

च्छिन्नविषयिताशून्यत्व–स्वविशिष्टनिश्चयसामानाधिकरण्यैतत्त्रितयसम्बन्धेन एतत्सम्बन्धघटकनिश्चये स्ववैशिष्ट्यंच स्वनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयिताशून्यत्व–स्वनिरूपितसामानाधिकरण्यसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्रूपवत्त्वोभयसंबन्धेन निश्चयद्वये रूपवत्त्वंच स्वावच्छिन्नविषयितावत्त्व–स्वावच्छिन्नविषयित्वाधिकरणवृत्तिकिञ्चिद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकविषयितानिरूपितकिञ्चिद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयता नास्तीति प्रतीतिसिद्धाभावप्रतियोगिविषयताशून्यत्वोभयसम्बन्धेनेति यदि वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वानङ्गीकारेण तादृशसम्बन्धावच्छिन्नप्रतियोगि-

ताकप्रतिबन्धकत्वाऽभावाप्रसिद्ध्योक्तानुगमद्वयमपि न सङ्गच्छत इति विभाव्यते तदा स्वनिष्ठनिरुक्ता-भावप्रति[1]योगितानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]ता-विशिष्टविषयितानिष्ठप्रकारतानिरूपितविशेष्यत्वस्य प्रमेयविशेष्यत्वीयस्वरूपसम्बन्धेन योऽभाव-स्तद्वत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वम् अनतिरिक्तवृत्तित्वकल्पे द्वितीयसम्बन्धः द्वितीय-कल्पे स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयिताविशिष्टकिंचिद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपकतानिरू-

---

१ अवच्छेदकत्वे । २ प्रतियोगितायाम् । ३ भेदे । ४ वृत्तित्वे । ५ निश्चये ।

पिताधिकरणतानिष्ठप्रकारतानिरूपितविशेष्यताया यः प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धेनाऽभावस्त-
द्वत्प्रतीतिविषयितानिरूपकतावच्छेदकतावत्त्वं द्वितीयसम्बन्ध इति बोध्यम् तथाच ज्ञानवैशिष्ट्या-
वच्छिन्नप्रतिबन्धकतावृत्तिनिरुक्ताभावीयप्रतियोगितानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टविषयिता-
प्रकारकतादृशाविशिष्टविषयकनिश्चयविशेष्यकबुद्धेः प्रमात्वन तादृशप्रकारतानिरूपितविशेष्यतायाः
प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धेन तादृशविशिष्टविषयकनिश्चये सत्त्वेन तदभाववती प्रतीतिस्ता-
दृशविशिष्टाऽविषयकैवेति न तत्रातिव्याप्तिः बाधप्रतिबन्धकतानिष्ठतादृशाभावाऽप्रसिद्धावपि तादृश-
प्रतिबन्धकतावृत्तित्वेन तादृशाभावावगाहितन्निष्ठतादृशाभावप्रतियोगितानिरूपितावच्छेदकताविशिष्ट-



विषयितावद्वह्न्यभाववद्ध्रदविषयकज्ञानमिति भ्रमसंभवात् तादृशभ्रमीयतादृशविषयिताप्रकारतानिरू-
पितविशेष्यतायाः प्रमीयविशेष्यताप्रतियोगिकस्वरूपात्मकव्यधिकरणसम्बन्धेन दोषज्ञानेऽसत्त्वेन ल-
क्षणसमन्वयः यदि विशेषरूपेण स्वरूपादीनां सम्बन्धत्वं न स्वीक्रियते तदोक्तप्रकारेणाऽनुगमाऽ-
सम्भवेपि प्रकृतानुमितित्वव्यापकप्रतिबध्यताविशिष्टरूपवत्त्वं लक्षणम् प्रतिबध्यतावैशिष्ट्यञ्च स्वनि-
रूपितप्रतिबन्धकतावृत्तिकिंचिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिता-
शालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितपरम्प-
रावच्छेदकत्व-स्वावच्छेदकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिकिंचिद्रूपावच्छिन्नविषयि-

त्वाऽव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयाविशि-
ष्टताद्दशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वम् नास्तीति प्रतितिसिद्धाभावप्रतियोगितानिरूपितनिश्चय-
निष्ठावच्छेदकताविशिष्टविषयिता नास्तीति प्रतीतिसिद्धाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वो-
भयसम्बन्धेन इदानीं बाधनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकधर्मावच्छिन्नप्रतिब-
ध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय द्वितीयसम्बन्धोपि दोषतावच्छेदकरूपेऽस्ती-
ति व्यधिकरणसम्बन्धावच्छिन्नाभावो न वक्तव्यः असंग्राह्यविशिष्टविषयकानिश्चये ज्ञानवैशिष्ट्याव-
च्छिन्नप्रतिबन्धकतावृत्तिताद्दशाभावप्रतियोगितानिरूपितावच्छेदकताविशिष्टविषयितासामान्याभावस्या-

भावेन नातिव्याप्तिः एवं स्वरूपसम्बन्धरूपावच्छेदकत्वपक्षेपि तादृशप्रतिबध्यताविशिष्टरूपवत्त्वमेव लक्षणं वैशिष्ट्यघटकप्रथमसम्बन्धः प्रागुक्त एव द्वितीयसम्बन्धश्च स्वावच्छेदकावच्छिन्नप्रतिबध्यता-निरूपितप्रतिबन्धकतावृत्तिकिंचिद्रूपावच्छिन्नविषयिताविशिष्टकिंचिद्रूपावच्छिन्नविषयितात्वावच्छिन्नप्र-तियोगिताकाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वरूपः अभावस्य प्रतिबन्धकतावृत्तित्वञ्च स्वप्रतियोगिताविशिष्टनिश्चयीयविषयित्वावच्छिन्नत्वसम्बन्धेन प्रतियोगितावैशिष्ट्यञ्च प्रागुक्तस्वरूप-सम्बन्धरूपावच्छेदकत्वपक्षानुगमे निरूपकतावैशिष्ट्यनियामकसम्बन्धेनेति न काचिदनुपपत्तिः ।
अत्र चिकीर्षासामग्र्या अनुमितिप्रतिबन्धकतामते ह्रदो वह्निमान् कृतिसाध्यतावदिष्टसाधनतावत्पाक-

कालीनजलादित्यत्राऽसाधारण्येऽव्याप्तिः तत्राऽसाधारण्यज्ञानचिकीर्षासामग्र्योरेकधर्मावच्छिन्नंप्रत्येव प्रतिबन्धकत्वादतस्तद्वारणायाऽनतिरिक्तवृत्तित्वरूपावच्छेदकताया विशेषणदले प्रवेश इति । नन्वेवं सति प्रतियोगित्वं वह्निमत् वह्न्यभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववत्कालीनजलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिवह्न्यभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववत्कालीनजलरूपासाधारण्येऽव्याप्तिः प्रतियोगितात्वविशिष्टे वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नंप्रति पक्षे हेतुमत्ताज्ञानकालीनाऽसाधारण्यविषयकनिश्चयस्य प्रतिबन्धकतया तदवच्छिन्नंप्रत्येव वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववद्वह्न्यभाववद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्ववत्प्रतियोगित्वमिति निश्चयविशिष्टनिश्चयस्य प्रतिबन्धकतया तादृशाऽसाधारण्यनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः प्रथमसम्बन्धस्याऽसाधारण्यतावच्छेदकरूपे सत्त्वेपि द्वितीयसम्बन्धो नास्त्येव तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकपक्षे–साध्यवैशिष्ट्यावगाहित्वघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपिता या उक्तावच्छेदकधर्मदर्शनप्रतिबन्धकता तद्वृत्तिनिरुक्ताभावीयप्रतियोगितानिरूपितनिश्चयनिष्ठावच्छेदकताविशिष्टोक्तैकविशिष्टविषयताविशिष्टापरविषयितायास्तादृशाऽसाधारण्यविषयकनिश्चये सत्त्वादिति चेन्न । असाधारण्यविषयकनिश्चयस्य सामानाधिकरण्येनानुमितिमवच्छेदकावच्छेदेनानुमितिं प्रत्यपि प्रतिबन्धकत्वं पक्षे हेतुमत्ताज्ञानं यादृशं तादृशानुमितिंप्रत्येव तस्य प्रतिबन्धकत्वात् प्रकृतासाधारण्यघटकावच्छेदकधर्मदर्शनस्यतु अ-

वच्छेदकावच्छेदेनानुमितिं प्रति प्रतिबन्धकत्वं तादृशासाधारण्यशरीरे व्यापकताघटकतया प्रतियोगित्वांशे वह्न्यभावावच्छेदकत्वेन गृहीतस्य वह्न्यधिकरणनिष्ठाभावनिरूपितत्वस्य सामानाधिकरण्येनैव प्रविष्टत्वात् अवच्छेदकधर्मदर्शनप्रतिबन्धकत्वस्य बाधबुद्धितुल्ययोगक्षेमत्वात् तादृशासाधारण्यशरीरे प्रतियोगितात्वावच्छेदेन तादृशावच्छेदकधर्मप्रवेशेऽवच्छेदकावच्छेदेन तादृशधर्मविशिष्टप्रतियोगित्वाप्रसिद्ध्या विशिष्टदोषाप्रसिद्ध्या क्वाऽव्याप्तिः एवञ्चाऽसाधारण्यनिश्चयनिष्ठसामानाधिकरण्येनानुमि-

---

१ ननु वह्न्यधिकरणवृत्त्यभावनिरूपितत्वस्य संयोगेन प्रमेयाभावनिरूपितप्रतियोगितायां बाधात् व्यापकत्वभङ्गो निश्चेतव्य इति भ्रमः प्रमेयाभावस्यापि संयोगेन वह्न्यधिकरणे कालिकेन वर्तमानत्वात् । नच वह्न्यधिकणनिरूपितवृ-

तिप्रतिबन्धकतामादाय लक्षणसमन्वयः तादृशप्रतिबन्धकत्तानिरूपितप्रतिबध्यतावच्छेदकतापर्याप्त्य-
धिकरणशुद्धसंयोगसम्बन्धेन वह्निमत्प्रतियोगित्वबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां ता-

---

त्त्तितायां स्वरूपसम्बन्धावच्छिन्नत्वं निविष्टमिति वाच्यम्। अननुगमात् किंच कालपक्षककालिकसम्बन्धावच्छिन्न-
प्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावसाध्यकस्थले निरुक्तप्रमाविशेष्यत्वाभावाऽभाववन्निरुक्तप्रमाविशेष्यत्वा-
धिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितानिरूपकत्ववद्वृत्तिनिरुक्तनिरूपकत्ववत्कालेऽतिव्याप्तेः तत्रच स्वरूपस-
म्बन्धघटितविशिष्टद्वयाऽघटितत्वस्य प्रकृतविशिष्टद्वयघटितसमुदाये सत्त्वादिति चेन्न। किंचित्प्रतिबन्धकतानिरूपितप्रतिब-
ध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतानियामकसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वादिति।

दृशासाधारण्यघटकविशिष्टद्वयविषयिताशालिनिश्चयत्वव्यापकत्वाभावेनाऽन्यविशिष्टद्वयस्यैव तादृशत्वात् तद्विषयिताशून्यत्वस्योक्तासाधारण्यनिश्चये सत्त्वात् । एतेनाभावो गगनत्ववान् आधेयत्वादित्यत्र गगनत्वव्यापकाभावप्रतियोग्याधेयत्वरूपासाधारण्ये हेतुमत्पक्षघटितेऽव्याप्तिः प्रतिबन्धकताद्यैक्यविवक्षायामपि दुर्वारेति परास्तम् । तादृशासाधारण्यस्य हेतुमत्पक्षविशिष्टासाधारण्यरूपविशिष्टद्वयघटितत्वेपि विशिष्टाऽसाधारण्यनिश्चये हेतुमत्पक्षविषयिताशून्यत्वाभावेन तादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्तुमशक्यत्वात् परस्पर[1]विषयिताशून्ययादृशविशिष्टद्वयविषयकनिश्चयत्वं तादृश-



१ परस्परविषयिताशून्ययादृशविशिष्टद्वयविषयकनिश्चयत्वमित्यस्य चरमनिश्चयीयविषयितानिरूपकतावच्छेदकयद्रूपावच्छिन्ननिरूपकताकविषयित शून्ययद्रूपावच्छिन्नविषयकनिश्चयविशिष्टप्रथमनिश्चयीयविषयितानिरूपकतावच्छेदकयद्रूपावच्छिन्ननिरूपकताकविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यत्वमर्थः । नन्वत्र सर्वत्रासम्भवः जलवान् ह्रद इति चरमनिश्चयीयजलत्वनिष्ठानिरूपकतावच्छेदकताकजलविषयिताया जलवान् वह्न्यभाववानित्यादिज्ञाने सत्त्वात् । नच पर्य्याप्तिनिवेशे नायं दोष इति वाच्यम् । अभावो गगनत्ववान् आधेयत्वादित्यत्राव्याप्तेर्वज्रलेपत्वात् तथाहि आधेयत्ववदभावत्वपर्य्याप्तावच्छेदकताकनिरूपकताकविषयिताशून्यत्वमसाधारण्यविषयकनिश्चयेऽसाधारणनिश्चयीयविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्य्याप्तावच्छेदकताकविषयिताशून्यत्वंच केवलहेतुमत्पक्षविषयकज्ञाने चेति चेन्न । परस्परविषयिताशू-

प्रतिबन्धकतानतिरिक्तवृत्तिताद्दशविशिष्टद्वयविषयिताशून्यत्वस्य ताद्दशासाधारण्यनिश्चयेऽक्षतत्वात् ए-
वं घटो गगनाभाववदभ वव कालीनगगनवानित्यत्र बाधेपि नाव्याप्तिः तत्र ताद्दशबाधनिश्चयनिरूप-

---

न्यत्वमित्यनन विशिष्टद्वयीयविशेष्यतानिरूपितविशेष्यित्वीयनिरूपकतावच्छेदकरूपावच्छिन्नविषयिताशून्यत्वस्य विव-
क्षितत्वात् तथाचासाधारण्यघटकव्यापकत्वशरीरे गगनत्वाधिकरणवृत्तितावानभाव इत्यंशीयविशेष्यताया अपि ग्रह-
णात्तच्छून्यत्वस्यासाधारण्यज्ञानेऽसत्त्वेन निरुक्तविशिष्टद्वयपदेनैतद्विशिष्टद्वयस्य धर्तुमशक्यत्वाद्विशिष्टद्वयान्तराऽघटितत्वा-
न्नाव्याप्तिः एवमेव जलवद्वृत्तित्ववह्न्यभाववज्जलवत्त्वरूपनिरुक्तरूपावच्छिन्नविषयिताशून्यत्वसत्त्वात् सर्वं समञ्जसमिति नि-
र्मत्सरतर्करसिका विभावयन्तु ।

ता या विशिष्टगगनवत्ताबुद्धित्वावच्छिन्ना प्रतिबध्यता तस्यां उक्तोभयसंबन्धेन तादृशबाधतावच्छेद-
के सत्त्वात् तत्र गगनाभाववदभाववत्कालीनगगनाभावत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नवि-
शेष्यताशालिनिश्चयत्वाऽवच्छिन्नप्रतिबन्धकतानिरूपितविशिष्टगगनवत्ताबुद्धित्वाऽवच्छिन्नप्रतिबध्यताया-
स्तादृशानुमितित्वव्यापिकायाः सत्त्वात् तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताघटितप्रथमसंबन्धस्य
च सत्त्वात् एवं तदवच्छेदकविशिष्टगगनवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता या तद्व्यक्तित्ववान्
तादृशगगनाभाववान् तद्व्यक्तित्ववान् घट इति निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकता तन्निष्ठतादृ-
शनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितानिरूपितनिश्चय-

निष्ठावच्छेदकताविशिष्टविषयिताया उक्तबाधनिश्चयेऽसत्त्वेन द्वितीयसंबन्धस्यच सत्त्वात् । नचाभाववान् गगनाभाववान् अभाववान् घट इति निश्चयविशिष्टनिश्चयस्यापि तादृशविशिष्टगगनवत्ताबुद्धिप्रतिबन्धकतया तादृशप्रतिबध्यतावच्छेदकधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितोक्तनिश्चयनिष्ठप्रतिबन्धकतावृत्तितादृशाभावप्रतियोगितावच्छेदकताविशिष्टविषयिताया उक्तबाधज्ञाने सत्त्वेन कथं तत्संग्रह इति वाच्यम् । स्वनिरूपितप्रतिबध्यतावच्छेदकतात्वाच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकप्रतिबध्यताया एव तादृशसंबन्धशरीरे निवेशनीयतया गगनाभाववदभाववदभाववद्घटविषयकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकशरीरे घटो गगनवान् तादृशविशिष्टगगनवान् पट-



कालीनगगनवान् इत्यादिज्ञानानामेकरूपेण प्रतिबध्यतानिर्वाहाय घटविशेष्यकगगनप्रकारकबुद्धित्वस्यैव प्रवेशेन तादृशविशिष्टबाधनिश्चयनिरूपितप्रतिबध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकस्य तादृशविशिष्टगगनत्वादिनिष्ठसमुदायत्वस्योक्तावच्छेदकधर्मदर्शनप्रतिबध्यतावच्छेदकतापर्याप्त्यवच्छेदकत्वाभावेन तादृशनिश्चयविशिष्टनिश्चयनिष्ठप्रतिबन्धकताया व्यावर्तनात् । नचाभाववान् गगनाभाववान् अभाववान् घट इति निश्चयकाले घटे तादृशविशिष्टगगनवत्ताबुद्ध्यनुत्पादेन ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकताया आवश्यकतया तत एव विशिष्टगगनाभाववद्घटवत्तानिश्चयकालेऽप्यनुमित्यनुत्पादनिर्वाहे ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां मानाभाव इति वाच्यम् । तथा सति अभाववति गगनाभावोऽव्याप्यवृत्तिरिति नि-

श्चयकाले तादृशबाधनिश्चयानन्तरं तादृशविशिष्टानुमित्यापत्तेः अवच्छेदकधर्मदर्शनस्यापि व्यापकांशेऽव्याप्यवृत्तित्वज्ञानाभावविशिष्टनिश्चयविशिष्टस्यैव प्रतिबन्धकत्वात् एवं गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेपि नाव्याप्तिः तत्र तादृशघटो गगनवानिति बुद्धिंप्रति अभाववान् गगनाभाववान् अभाववान् गगनाभाववदभाववत्कालीनघट इति निश्चययोः प्रतिबन्धकत्वेपि तादृशविशिष्टयोः परस्पराघटितत्वाभावेन तद्घटितत्वस्याकिंचित्करत्वात् अभाववान् गगनाभाववान् अभाववान् घट इति निश्चययोः प्रतिबन्धकत्वमेव नास्ति अभाववान् घट इति निश्चयस्य घटत्वसामानाधिकरण्येनाऽभावावगाहित्वेऽनुमितेरपि घटत्वसामानाधिकरण्येन गगनावगाहितया-

ऽप्रतिबन्धकत्वात् अवच्छेदकावच्छेदेन तदवगाहित्वे तादृशघटस्य बाधघटकत्वमेव नास्तीति नाव्याप्तिः अतस्तादृशबाधनिश्चयस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वमन्तरेण स्वतन्त्रविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकताविरहेऽपि न क्षतिः यद्यपि तादृशविशिष्टपक्षकगगनसाध्यकस्थलेऽभाववत्तादृशघटेऽतिव्याप्तिः तद्घटकोभूतविशिष्टद्वयस्य परस्पराघटितत्वाभावेन यादृशविशिष्टपदेन धर्तुमशक्यतया तादृशविशिष्टद्वयाऽघटितत्वस्याक्षतत्वात् एवं रूपं नीलरूपवदित्यत्र नीलरूपाभाववन्नीलेऽतिव्याप्तिः एवमभावो वह्निमानित्यत्र वह्न्यभाववद्वह्निमत्यतिव्याप्तिः तत्रोभयत्र तद्घटकीभूतविशिष्टद्वयस्य परस्पराऽघटितत्वाभावात् तथापि वक्ष्यमाणविशिष्टात्तराऽघटितत्वस्यैतेन परिष्कारेणैव वारणीयतया न दो-

षः यदि अत्रापि तादृशदोषोद्धार आवश्यकस्तदा विशेष्यदलघटकविषयितायां तत्तद्विषयिताभिन्नत्वं विशेषणं देयम् । नन्वत्र विशिष्टद्वयाघटितत्वनिवेशो व्यर्थः एकविशिष्टाऽघटितत्वनिवेशादेवोक्तातिव्याप्तिवारणात् तथाहि यादृशविशिष्टविषयकत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वं लक्षणं तथाच नोक्तविशिष्टेऽतिव्याप्तिः वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयतादृशजलवद्ध्रदत्वावच्छिन्नविषयिताया ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तितया तद्रूपावच्छिन्नविषयिताशून्यत्वस्य तादृशविशिष्टविषयकज्ञानेऽसत्त्वात् । नच वह्न्यभाववद्ध्रदादिरूपबाधाद्यसंग्रहः तेषां स्वात्मकविशिष्टघटितत्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयिता प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिः तद्रूपावच्छिन्नविषयिताशून्यत्वस्य विवक्षणीयत्वात् तथाच बाधादिविषयिताया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानऽतिरिक्तवृत्तित्वाभावात् यादृशविशिष्टविषयिता तादृशी तच्छून्यत्वस्य बाधादिज्ञाने सत्त्वान्नाव्याप्तिः । नचैवमपि घटो गगनाभाववद्भाववत्कालीनगगनवानित्यादौ बाधेऽव्याप्तिः तादृशबाधज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अपि सत्त्वेन तद्विषयितायास्तादृशप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिति वाच्यम् । यादृशविशिष्ट-

विषयिता ज्ञानवैशिष्ट्यं[1]वच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदिका तादृशविषयिताशून्यत्वस्य विवक्षणीयत्वात् उक्तबाधविषयिताया ज्ञानवैशिष्ट्याऽनवच्छिन्नप्रतिबन्धकतायामप्यवच्छेदकतया तादृशी विषयिता गगनाभाववदभाववत्कालीनगगनाभाववत्तद्व्यक्तित्ववद्वृत्तितद्व्यक्तित्ववद्घटविषयितैवेति तच्छून्यत्वस्योक्तबाधज्ञाने सत्त्वादव्याप्तिविरहात् । नच गगनवत्प्रतियोगित्वं गगनाभाववद्वह्न्यधिकरणवृत्त्यभावनिरूपितत्ववत्कालीनवह्निमज्जलादित्यत्रावच्छेदकधर्मघटिताऽसाधारण्येऽव्याप्तिः तादृशासाधारण्यविषयितायाः तादृशानुमितित्वव्यापकविशिष्टपक्षग्रहत्वा-

१ अत्र प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वस्य प्रयोजनाभावेनानुपादेयत्वम् ।

वच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तितया ज्ञानवैशिष्ट्यावच्छिन्न-
प्रतिबन्धकतानवच्छेदकतयाच तादृशासाधारण्यस्य यादृशविशिष्टपदेन धर्तुं शक्यत्वेन तदघटितत्व-
स्य तत्रासत्त्वादिति वाच्यम्। स्वमत इवात्रापि प्रतिबन्धकतैक्यस्य विवक्षणीयत्वात् तथाच विशेष्य-
दलघटकीभूताया असाधारण्यविषयकनिश्चयत्वव्यापिकायाः पक्षतावच्छेदकावच्छिन्ने विशिष्टसाध्यवैशि-
ष्ट्यावगाहित्वावच्छिन्नप्रतिबध्यतानिरूपितायाः प्रतिबन्धकतायाः प्रकृतासाधारण्यघटकावच्छेदकध-
र्मदर्शननिष्ठप्रतिबन्धकतायाः विशिष्टपक्षग्रहत्वावच्छिन्ननिरूपिताया गगनाभाववद्वह्निमन्निष्ठाभावनिरू-
पितत्ववत्त्वविशिष्टविषयकनिश्चयविशिष्टवह्निमन्निष्ठाभावनिरूपितत्ववत्प्रतियोगितात्वविशिष्टविषयकनि-

श्चयत्वावच्छिन्नायाश्चैक्याभावेन न तत्राव्याप्तिः तथाच प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-
प्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम् प्रतिबन्धकतावैशिष्ट्यंच स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वा-
व्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्ती-
ति प्रतीतिसिद्धाभावीयप्रतियोगि[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानि-
रूपितावच्छेदक[5]तानिरूपितावच्छेदक[6]तानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वतादा-
त्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिष्ठकिञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यकि-- 

१ अवच्छेदकत्वे । २ प्रतियोगितायाम् । ३ भेदे । ४ वृत्तित्वे ५ निश्चये । ६ विषयितायाम् ।

ञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्र-
तियोगितानिरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपि-
तावच्छेदक[5]तानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयितासम्बन्धावच्छिन्न-
स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन एवंचैतन्मतेपि स्वमते अनुगमघटक-
सम्बन्ध एवात्राप्यनुगमघटकः तादृशाद्वितीयसंबन्धघटकाभावो लघुशरीर इति लाघवमेतन्मते एवंच
गगनवत्प्रतियोगित्वं गगनाभाववद्ध्रदवृत्त्यधिकरणनिष्ठाभावनिरूपितत्ववत्कालीनवह्निमज्जलादित्यत्रासा--

१ प्रतियोगित्वे । २ भेदे । ३ वृत्तित्वे । ४ निश्चये । ५ विषयितायाम् ।

धारण्ये नाव्याप्तिः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपिताऽसाधारण्यविषयकत्वावच्छिन्नप्रतिब-
न्धकताविशिष्टरूपं तादृशासाधारण्यतावच्छेदकं तादृशप्रतिबन्धकतावृत्तिर्यः पक्षे हेतुमत्ताज्ञानका-
लीनाऽसाधारण्यविषयकनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोभावस्तन्निरूपि-
तप्रतियोगितया परम्परया निरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतायाः प्रथमसंबन्धस्य तत्र स-
त्त्वात् एवं स्वतादात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वं स्वयमेव तत्र च यादृशविशिष्टविषय-
कत्वाव्यापकविषयिताशून्ययादृशविशिष्टविषयकनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रती-
तिसिद्धाभावस्तादृशविशिष्टाप्रसिद्ध्या स्वभिन्नविशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितगगनाभाव-

वद्वह्न्यधिकरणनिष्ठाभावनिरूपितत्वविशिष्टविषयकनिश्चयविशिष्टवह्न्यधिकरणनिष्ठाभावनिरूपितत्वव--
त्प्रतियोगितात्वविशिष्टविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वादौ गगनाभाववद्वह्न्यधिकरणवृत्त्यभावनि-
रूपितत्ववद्वृत्तितादृशनिरूपितत्ववत्प्रतियोगितात्वविशिष्टविषयकत्वाऽव्यापकविषयिताशून्यतादृशविष-
यिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्य सत्त्वात् स्वता-
दात्म्यापन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावघटितसम्बन्धस्य तस्य व्यधिकरणत्वेन
द्वितीयसम्बन्धस्यच सत्त्वात् एवं घटो गगनाभाववदभाववत्कालीनगगनवानित्यत्र बाधे नाव्याप्तिः
तत्र ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताया द्वितीयसम्बन्धघटकाविषयित्वस्य व्यधिकरणसम्बन्धत्वा-

त् तथाचैतन्मते गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्राऽभाववत्तादृशघटे रूपं नीलरूपव-
दित्यत्र नीलरूपाभाववन्नीले अभावो वह्निमानित्यत्र वह्न्यभाववद्वह्निमातिच नातिव्याप्तिः तत्र ज्ञान-
वैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादायैव लक्षणसत्त्वस्योपपादनीयतया अभाववत्तादृशघटत्वादौ तादृश-
प्रतिबन्धकतायाः प्रथमसम्बन्धस्य सत्त्वेपि द्वितीयसंबन्धस्याभावात् तत्राभाववत्तादृशघटत्वावच्छि-
न्नविषयिताशाल्यव्यापकविषयिताशून्यनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धा-
भावसत्त्वेन तन्निरूपितप्रतियोगिताघटितोक्तविषयित्वाभावस्य तादृशविशिष्टविषयकप्रतीतावभावात् ।
नचैवं तादृशविशिष्टघटपक्षकगगनसाध्यकस्थले गगनाभाववद्विशिष्टघटात्मकबाधेऽव्याप्तिः तत्र ज्ञा-



नवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सत्त्वेन तादृशप्रतिबन्धकताया उक्तोभयसंबन्धस्य तादृशघटत्वे-
ऽसत्त्वात् स्वमते तादृशबाधघटकगगनाभाववदभाववत्त्वविशिष्टबाधरूपविशिष्टयोः परस्पराघटित्वाभा-
वेन तदुभयघटितत्वं नाव्याप्तिसंपादकम् एवमभावो गगनत्ववानाधेयत्वादित्यत्र गगनत्वव्यापकाभावप्र-
तियोग्याधेयत्वरूपासाधारण्येऽव्याप्तिः तत्रापि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सत्त्वात् एवं व-
ह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवद्वह्न्यभाववद्वह्न्यभावव्याप्य-
वत्कालीनह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः एवं धूमाभाववद्धूमाभावव्याप्यवत्कालीनह्रदो वह्निमान् धूमादित्य-
त्र धूमाभावव्याप्यवत्तादृशह्रदरूपस्वरूपासिद्धावव्याप्तिः एवं धूमवान् धूमाभाववद्वृत्तित्ववद्धूमाभाववद्व-

सा०नि० ॥ ११२ ॥

त्तित्वव्याप्यवत्कालीनवह्नेरित्यत्र धूमाभाववद्वृत्तित्वव्याप्यवत्तादृशवह्निरूपव्यभिचारेऽव्याप्तिरेवं विरोधेऽप्यव्याप्तिः सर्वत्र तादृशदोषज्ञानानां ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वात् स्वमते तादृशदोषघटकविशिष्टद्वयस्य परस्पराघटितत्वाभावेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्य धर्तुमशक्यतया विशिष्टद्वयान्तराघटितत्वसत्त्वात् नाव्याप्तिरिति वाच्यम् । स्वमतेऽतिव्याप्तिवारणाय विशेष्यदलघटकविषयितायां विषयिताविशेषभेदो निवेश्यः एतन्मते उक्ताव्याप्तिवारणाय विशेषणदलघटकविषयितायां विषयिताविशेषभेदो निवेश्य इति तुल्यं स्वमते लक्षणशरीरगौरवं परमतिरिच्यत इति चेन्न । नानाविधावच्छेदकधर्मदर्शनानामेकरूपेण प्रतिबन्धकत्वमिति–मते एतन्मते सर्वत्र प्रागुक्तदो-

विवेचना.

॥ ११२ ॥

षेष्वव्याप्तिः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया उक्तोभयसंबन्धेन दोषतावच्छेदकेऽसत्त्वात् तत्र प्रथमसंबन्धस्य सत्त्वेपि तादृशप्रतिबन्धकतावृत्तिविशिष्टदोषविषयकनिश्चयानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वाभावात् एकरूपेण प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नंप्रति वह्न्यभाववत्त्वा-

---

१ प्रतियोगितायाम् । २ भेदे । ३ वृत्तित्वे । ४ निश्चये । ५ विषयितायाम् ।

वच्छिन्नप्रकारताविशिष्टहृदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन विशेष्यतायां प्रकारतावैशिष्ट्यंच स्व-
विशिष्टप्रकारतानिरूपितत्व–स्वनिरूपकनिश्चयसमानाधिकरणज्ञानीयत्वोभयसंबन्धेन प्रकारतायां स्व-
वैशिष्ट्यंच स्वनिरूपितविशेष्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्व–स्वविशिष्टरूपावच्छिन्नत्वोभय-
संबन्धेन रूपे स्ववैशिष्ट्यंच स्वनिरूपितविशेष्यतावच्छेदकतावच्छेदकत्व–स्वनिरूपितसंसर्गतानिरू-
पितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयनिष्ठावच्छेदकतानिरूपितकिंचित्समानाधिकरणभेदप्र-
तियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदक-
तानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपि-



तभेदनिष्ठाऽवच्छेदकतानिष्ठाऽवच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताधि-
करणनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताधेयतासं--
बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसंबन्धेनेति । अवच्छेदकधर्मदर्शनानामेकरूपेण प्रतिबन्धकत्वानङ्गी-
कर्तृमते नीलरूपाभाववन्नीलमित्यादिनिश्चयानां विशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वं तादृशज्ञानस्य नि-
यमतो रूपत्वविशिष्टे नीलत्वावगाहितया ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वे प्रमाणाभावात् तथाच त-
न्मते तत्राऽतिव्याप्तिः तत्प्रतिबन्धकतायाः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तितादृशाभावघटि-
तविषयितात्मकसंबन्धस्य व्यधिकरणत्वात् तथाच मतद्वयानुसारेण लक्षणकरणे उक्तस्थलेष्वतिव्या-

प्त्यव्याप्तिवारणाय विशेष्यदले विषयितायामुक्तविषयिताभेदः विशेषणदले विषायतायां प्रागुक्तसर्व-
विषयिताभेदो निवेशनीय इति गौरवं स्वमते मतद्वयेप्यतिव्याप्तिवारणाय विशेष्यदले विषयितायामेव
विषयिताविशेषभेद एव निवेश्य इति लाघवम् । यत्तु कैश्चिदुक्तं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताला-
भायैव तदभिधानमिति । तदसत् । उक्तरीत्या तन्निवेशस्यावश्यकत्वात् । यत्तु एकविशिष्टाघटितत्व-
निवेशे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयितावच्छेदवह्न्यभाववज्जलवत्कालीनजलवद्ध्रदविषयितावच्छेदा-
दीनां निवेशनीयतया गौरवं विशिष्टद्वयाघटितत्वपक्षे न तादृशगौरवं वह्न्यभाववज्जलवत्त्वविशिष्टविष-
यिताविशिष्टजलवद्ध्रदत्वविशिष्टविषयित्वाभावस्य निवेशादेवैकावच्छेदकधर्मघटितनानाविशिष्टवारणसं-

भवादिति । तदपि न । उक्तप्रकारेणानुगमे तादृशगौरवाप्रसक्तेरिति । नन्वत्र यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमित्यत्र प्रथमनिश्चयत्वस्थाने ज्ञानत्वं निवेशनीयं द्वितीयं निश्चयत्वघटितं तथाच यादृशविशिष्टविषयकज्ञानविशिष्टयादृशविशिष्टविषयकनिश्चयत्वम् प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वं विशेषणम् इदानीं ज्ञानवैशिष्ट्यं तादात्म्यसंबन्धेन द्वितीयनिश्चयत्वं संशयान्यत्वं तथाचैकांशे संशयात्मकापरनिश्चयस्य व्यावृत्त्या न तादृशविशिष्टाऽप्रसिद्धिः । नचैवमपि जलवान् वह्न्यभाववान् जातिमत्त्वान् ह्रदः जातिमत्त्वान् वह्न्यभाववान् जलवान् ह्रद इति समुहालम्बनज्ञानयोः प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयाप्रसिद्ध्या-

ऽसंभवापत्त्याऽव्यापकविषयिताशून्यत्वस्यावश्यं निवेशनीयतया सर्वत्र समूहालम्बनज्ञानमादायैव तादृशविशिष्टद्वयविषयकनिश्चयत्वेऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वस्योपपादनीयतया समूहालम्बनज्ञानेच प्रत्येकविषयिताऽव्यापकविषयित्वशून्यत्वस्याभावेन तादृशविशिष्टद्वयाप्रसिद्धिर्दुर्वारैव । नच किञ्चिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वमेव तादृशज्ञाने निवेशनीयम् एवंसति अनुगमशरीरप्रविष्टद्वितीयसम्बन्धघटकाभावोपि लघुशरीरः तथाच वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यवह्न्यभाववज्जलवत्त्वविशिष्टविषयकज्ञानात्मकजलवद्ध्रदत्वविशिष्टविषयकनिश्चयत्वे तादृशप्रतिबन्धकतानतिरिक्तवृत्तित्वसत्त्वात् न विशिष्टद्वयाऽप्रसिद्धिरिति वक्तव्यं । तथासति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यवह्न्यभाववद्ध्रदत्वविशिष्टविषयिताशालिज्ञानात्मकतादृशविशिष्टविषयकनिश्चयत्वस्य तादृशप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्टविषयिताविशिष्टतादृशविशिष्टविषयिताशून्यज्ञानविषयत्वरूपतादृशविशिष्टद्वयाघटितत्वस्याभावेन बाधादावव्याप्तिरिति वाच्यम् । ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतादृशविशिष्टद्वयविषयिताशून्यत्वस्य विवक्षणीयतयाऽव्याप्तिविरहादिति चेन्न । गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तेः तत्र गगनाभाववद्गगनाभाववदभाववत्कालीनघटत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यगगनाऽभाववदभाववत्त्वाविशिष्टविषयकज्ञानाऽऽत्मकतादृशविशिष्टबाधरूपविशिष्टविषयकनिश्चयत्व-

॥ ११९ ॥

स्य प्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्टविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वात् तादृशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया विशिष्टज्ञानत्वेन प्रतिबन्धकत्वे मानाभावात् तथाच तादृशविशिष्टविषयिताशून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वात् एवमभावो गगनत्ववानाधेयत्वादित्यत्रासाधारण्येऽव्याप्तेश्च तस्य चाऽऽधेयत्ववदभावत्वविशिष्टतादृशासाधारण्यरूपविशिष्टद्वयघटितत्वात् । नच स्वाभाववज्ज्ञानविशिष्टविषयितानिरूपकतावच्छेदकयद्रूपविशिष्टविषयकज्ञानाविशिष्टतादृशयद्रूपविशिष्टविषयकानिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वस्य निवेशनीयतया नोक्तबाधासाधारण्ययोरव्याप्तिः तत्र य-

द्रूपपदग्राह्यबाधासाधारण्यतावच्छेदकरूपयोस्तादृशप्रतिबन्धकताशून्यज्ञाननिष्ठविषयितानिरूपकताऽव-
च्छेदकत्वाभावेन तादृशतादृशविशिष्टद्वयस्य यादृशविशिष्टपदेन धर्तुमशक्यतया तद्व्यक्तित्ववान् गग-
नाभाववान् तद्व्यक्तित्ववान् तादृशघट इत्यादिज्ञानविषयविशिष्टयोरेव धर्तव्यतया तदघटितत्वस्य
तादृशबाधादौ सत्त्वादिति वाच्यम् । तादृशविशिष्टविषयिताऽव्यापकविषयिताशून्यत्वविवक्षणे ह्रदो ज-
लवज्जातिमत्कालीनवह्निमानित्यत्र जलवज्जातिमत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तेः तत्र
जलवान् जलवज्जातिमत्कालीनवह्न्यभाववान् जलवान् जातिमान् इति समूहालम्बनेपि जलवज्जाति-
मत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयताऽव्यापकविषयिताशून्यत्वसत्त्वेन तादृशज्ञा-

ने प्रतिबन्धकताविरहेण तादृशविशिष्टद्वयस्य यादृशविशिष्टद्वयपदेन धर्तुमशक्यतया पङ्कजवान् जलवज्जातिमत्कालीनवह्न्यभाववान् पङ्कजवान् ह्रद इति ज्ञानविषयीभूतविशिष्टद्वयस्यैव यादृशविशिष्टपदेन धर्तव्यत्वात्तदघटितत्वस्य तत्र सत्त्वात् । नच यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिज्ञानविशिष्टयद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षितयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वस्य विवक्षणान्नोक्तातिव्याप्तिः असमूहालम्बनात्मकप्रत्येकज्ञानीयविषयितायाः समूहालम्बनात्मकज्ञानीयविषयितायाश्चैक्यात् जलवान् जलवज्जातिमत्कालीनवह्न्यभाववान् जातिमान् जलवान् इत्या-



कारकसमूहालम्बने जलवद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यजलवान् ह्रद इति ज्ञानीयत्वोपलक्षितजलवद्ध्रदत्वावच्छिन्नविषयिताया अभावेन तत्र प्रतिबन्धकताया विरहेपि जलवान् तादृशवह्न्यभाववान् जलवान् ह्रद इति ज्ञाने तादृशविषयितावति प्रतिबन्धकतायाः सत्त्वेन यादृशविशिष्टपदेन तादृशविशिष्टद्वयस्यापि धर्तुं शक्यतया तदघटितत्वस्य तत्राभावादिति वाच्यम् । पूर्वोक्तबाधादिसंग्रहार्थं यद्रूपे स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वरूपविशेषणस्यावश्यकतया तद्घटकप्रतीतावनाहार्यत्वाऽप्रामाण्यज्ञानानास्कन्दितत्वनिश्चयत्वानां निवेशनीयतया गौरवात् । नच यद्रूपावच्छिन्नविषयिताऽव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वमेवोपलक्षणविधया विष-

यितायां निवेशनीयं तथाच नोक्तगौरवम् अपित्वनुगमशरीरे लाघवमेव तथाहि प्रकृतानुमितित्व-
व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम् वैशिष्टचं पूर्वोक्तसंबन्धद्वयेन द्विती-
यसंबन्धघटकाभावप्रतियोगितावच्छेदकसंबन्धश्च स्वनिष्ठो यः किंचिद्रूपावच्छिन्नविषयिताऽव्यापकविष-
यिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वोपलक्षितकिंचिद्रूपाऽवच्छिन्नविषयिताशालिज्ञानवि-
शिष्टकिंचिद्रूपावच्छिन्नविषयिताऽव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वोपल-
क्षितकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो-

ऽभावस्तन्निरूपितप्रति[1]योगितानिरूपितावच्छेदकं[2]तानिरूपितावच्छेदकं[3]तानिरूपितावच्छेदकं[4]तानिरूपि-- तावच्छेदकं[5]ताविशिष्टविषयितारूपः विषयितायामवच्छेदकतावैशिष्ट्यंच स्वविशिष्टरूपावच्छिन्नत्व—स्व- विशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसंबन्धेन प्रथमरूपे स्ववैशिष्ट्यंच स्वनिरूपितावच्छे- दकं[6]तावत्त्व—स्वनिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेदकँ[7]तानिरूपितावच्छेदर्कं[8]तानिरूपितावच्छेदकं[9]ता-

---

१ अवच्छेदकत्वे । २ प्रतियोगितायाम् । ३ भेदे । ४ वृत्तित्वे । ५ निश्चये । ६ विषयितायाम् । ७ ज्ञाने । ८ विषयितायाम् । ९ वृत्तित्वे ।

सा०नि०
॥ ११९ ॥

निरूपिताव[1]च्छेदकतानिरूपिताव[2]च्छेदकतानिरूपिताव[3]च्छेदकतानिरूपितावच्छिन्नत्वसंबन्धाऽवच्छिन्नाव-
च्छेदकतावत्त्वोभयसंबन्धेन रूपेऽवच्छेदकतावत्त्वं च स्वनिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छे-
दकतावत्त्व-स्वनिरूपितावच्छेद[4]कतानिरूपिताऽवच्छेद[5]कतानिरूपितावच्छेद[6]कतानिरूपितावच्छेद[7]कता-
निरूपितावच्छेद[8]कतानिरूपितावच्छेद[9]कतानिरूपितावच्छेद[10]कतानिरूपितावच्छेद[11]कतानिरूपितावच्छेद[12]-
कतानिरूपितावच्छेद[13]कतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वोभयसंबन्धेन द्वितीयरू-

१ ज्ञाने। २ शून्यत्वे। ३ विषयितायाम्। ४ वृत्तित्वे। ५ ज्ञाने। ६ शून्यत्वे। ७ विषयत्वे। ८ अवच्छेदकत्वे। ९ प्रतियोगितायाम्। १० भेदे। ११ वृत्तित्वे। १२ अधिकरणे। १३ विषयितायाम्।

विवेचना.
॥ ११९ ॥

पे स्ववैशिष्ट्यंच स्वनिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेद[1]कतानिरूपितावच्छेद[2]कतावत्त्व-स्वनिरू-
पितावच्छेद[3]कतानिरूपितावच्छेद[4]कतानिरूपिताऽवच्छेद[5]कतानिरूपितावच्छेद[6]कतानिरूपितावच्छेद[7]कता-
निरूपिताऽवच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वोभयसंबन्धेन एतत्संबन्धघटकावच्छेदकतावत्त्वं रू-
पे प्रागुक्तोभयसंबन्धेनेति, यद्यभावप्रतियोगितावच्छेदकशरीरे उपलक्षणविधया प्रवेशो नाङ्गीक्रिय-
ते तदा द्वितीयसंबन्धघटकप्रतिबन्धकत्वाभावप्रतियोगितावच्छेदकसंबन्धश्च स्ववृत्तिर्यस्तद्व्यक्तिवि
शिष्टज्ञानविशिष्टतद्व्यक्तिविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभा-

१ ज्ञाने। २ विषयितायाम्। ३ विषयितायाम्। ४ वृत्तित्वे। ५ ज्ञाने। ६ शून्यत्वे। ७ विषयितायाम्।

वस्तन्निरूपितप्रतियोगि[1]तानिरूपितावच्छेद[2]कतानिरूपितावच्छेद[3]कतानिरूपितावच्छेद[4]कतानिरूपिताव-
च्छेद[5]कताविशिष्टावच्छेद[6]कताविशिष्टविषयितारूपः अवच्छेदकतायामवच्छेदकतावैशिष्ट्यंच स्वतादा-
त्म्य-स्वविशिष्टविषयितानिष्ठोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकत्व-स्वविशिष्टविषयितानिष्ठो--
भयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकतादात्म्यसंबन्धावच्छिन्नावच्छेद[7]कतानिरूपकत्वैतत्रितयसंबन्धे-
नप्रथमविषयितायां स्ववैशिष्ट्यंच स्वनिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्न-
विषयिताऽव्यापकविषयिताशून्यज्ञानीयत्व-स्वनिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेदकतानिरूपिताव-

---

१ अवच्छेदकत्वे । २ प्रतियोगित्वे । ३ भेदे । ४ वृत्तित्वे । ५ निश्चये । ६ निश्चये । ७ ज्ञाने ।

च्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन द्वितीयविषयितायां स्ववैशिष्ट्यंच स्वनिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्व-स्वनिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन विषयितायामवच्छेदकतावैशिष्ट्यंच स्वनिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपिततादात्म्यसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावद्विषयितानिरूपकतावच्छेदकधर्मावच्छिन्न—

१ ज्ञाने ।

सा०नि० विषयितासामानाधिकरण्योभयसंबन्धेनेति वाच्यम् । यादृशस्थलेऽसंग्राह्यविशिष्टविषयकसमूहालम्बनम- विवेचना.
॥ १२१ ॥ प्रसिद्धम् तादृशविशिष्टेऽतिव्याप्तेर्वारणाय सामानाधिकरण्यरूपवैशिष्ट्यमेव निवेशनीयं तथाचोभय-
त्र निश्चयत्वनिवेश आवश्यकः यादृशस्थलेऽसंग्राह्यविशिष्टघटकप्रत्येकविषयकाऽसमूहालम्बनज्ञानमप्र-
सिद्धं तत्रातिव्याप्तिरुभयमतेपि तुल्येति । नन्वत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिब-
न्धकतानवच्छेदकविषयताशून्यत्वं निश्चये विशेषणं देयं तथाच सति अव्यापकविषयिताशून्यत्वं वि-
शिष्टान्तराघटितत्वं विशिष्टद्वयाघटितत्वंच नोपादेयं जातिमान् वह्न्यभाववानिति ज्ञाने प्रतिबन्धक- ॥ १२१ ॥
तानवच्छेदकजातित्वविषयताशून्यत्वाभावेन तद्व्युदासात् मेयत्वविशिष्टव्यभिचारनिश्चये तादृशमेयत्व-

विषयतायाः सत्त्वात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकज्ञाने तादृशवृत्तित्वविषयतायाश्च सत्त्वात्त-
योर्व्युदासाच्च । नचैवमसंभवः ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदरूपदोषविषयकनिश्चये ह्रदत्वप्रकारता-
निरूपितनिरवच्छिन्नविशेष्यतायास्तादृशप्रतिबन्धकतानवच्छेदिकायाः सत्त्वेन तच्छून्यत्वाभावादिति
वाच्यम् । प्रतिबन्धकतानवच्छेदकेत्यनेन प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वस्य विवक्षितत्वात
वैशिष्ट्यंच तादात्म्यावच्छिन्नत्वान्यतरसंबन्धेन तथाच ह्रदादिनिरवच्छिन्नविषयताया अपि प्रतिबन्धकता-
वच्छेदकह्रदत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वान्नासम्भवः । नचैवमपि ह्रदो वह्न्यभाववानिति ज्ञानस्या-
ऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारताकनिश्चयत्वेन लाघवात् प्रतिबन्धकताम-

ते वह्निनिष्ठविषयतायाः कस्याश्चिदपि प्रतिबन्धकतावच्छेदकत्वाभावेन तद्विषयताशून्यत्वाभावेन बाध-
विशेषेष्वव्याप्तिरिति वाच्यम् । तादात्म्या-ऽवच्छेद्यत्वा-ऽवच्छेद्यनिरूपितत्वा-ऽन्यतमसम्बन्धेन वै-
शिष्ट्यस्य विवक्षणीयत्वात् तादृशबाधज्ञानीयवह्न्यादिविषयताया अपि प्रतिबन्धकतावच्छेदकाभा-
वत्वावच्छिन्नप्रकारतावच्छेद्यतादृशविशेष्यतानिरूपितत्वेन तादृशविषयताविशिष्टान्यत्वाभावेन नाव्या-
प्तिः असंग्राह्याविशिष्टविषयकज्ञानीयवृत्तित्वविषयतायाः प्रतिबन्धकतावच्छेदकजलनिष्ठप्रकारत्वावच्छे-
द्यविशेष्यतानिरूपितत्वेन तादृशविषयताविशिष्टान्यत्वाभावेपि वृत्तितात्वनिष्ठविषयतायास्तादृशत्वेन
तच्छून्यत्वाभावान्नातिव्याप्तिः प्रमेयतात्वविषयतामादाय प्रमेयत्वविशिष्टव्यभिचारवारणमिति चेन्न ।

ह्रदो वह्न्यभाववानिति ज्ञानस्य संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्निप्रकारकतया तादृशप्रतियोगितायास्तादृशावच्छिन्नत्वविशिष्टप्रतियोगितात्वेन सम्बन्धत्वे केवलप्रतियोगितात्वेन सम्बन्धत्वे वा संयोगावच्छिन्नत्वप्रतियोगितात्वविषयितयोः प्रतिबन्धकतावच्छेदकाविषयतातादात्म्यावच्छिन्नत्वावच्छेद्यनिरूपितत्वानां मध्ये कस्याप्यभावेन तत्र तच्छून्यत्वाभावेनाऽव्याप्तितादवस्थ्यात् यदि प्रागुक्तसम्बन्धत्रयावच्छेद्यनिरूपितनिरूपितत्वान्यतमसम्बन्धेन वैशिष्ट्यं विवक्षणीयम् तथाच प्रतियोगितात्वादिविषयिताया अपि प्रतिबन्धकतावच्छेदकाभावत्वावच्छिन्नप्रकारत्वावच्छेद्यतादृशविशेष्यतानिरूपितप्रतियोगितानिष्ठसांसर्गिकविषयतानिरूपितत्वान्नाव्याप्तिरिति विभाव्य-

ते तदा वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकज्ञानीयवृत्तितात्वविषयताया अपि प्रतिबन्धकतावच्छेदकजलत्वावच्छिन्नप्रकारत्वावच्छेद्यताद्दशविशेष्यतानिरूपितवृत्तित्वनिष्ठविषयतानिरूपिततया ताद्दशविषयताविशिष्टान्यत्वाभावेनातिव्याप्तितादवस्थ्यात् अतो विशिष्टद्वयाघटितत्वं निवेशनीयम्, वस्तुतस्तु अवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छिन्नाभावनिष्ठप्रकारतानिरूपितह्रदनिष्ठविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वे वह्नित्ववदभाववद्ध्रदस्यैव बाधतया वह्न्यभाववद्ध्रदविषयकनिश्चयस्यासंग्रहेपि न क्षतिः अतो वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपविशिष्टेऽतिव्याप्तिवारणं प्रयोजनं विशिष्टद्वयाऽघटितत्वस्य न संभवति, परंतु ह्रदो वह्निमान् जलादित्यादौ एकत्र द्वयमिति रीत्या भासमानह्रदवृत्तित्ववह्निव्यापकीभूताभावप्रतियोगित्ववत्पङ्कजे असाधारण्यसत्प्रतिपक्षानात्मकेऽतिव्याप्तिः तज्ज्ञानीयविषयतायाः कस्या अपि तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन प्रतिबन्धकताविशिष्टायाः अप्रसिद्धेः, एवं विशिष्टान्तराघटितत्वविशेषणमप्यावश्यकम् अन्यथा ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदावच्छिन्नेऽतिव्याप्तिः तत्रापि ह्रदत्वावच्छिन्नप्रकारताया वह्न्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतारूपप्रतिबन्धकतावच्छेदकविषयत्वावच्छेद्यत्वात् धर्मिविषयतायाश्च ताद्दशप्रकारतानिरूपितत्वात् ताद्दशविषयताविशिष्टान्यविषयतायास्ताद्दशज्ञानेऽसत्त्वात्, एवं ह्रदो वह्न्यभाववानिति ज्ञानस्य वह्निनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रकारताशालिज्ञानत्वे-

न प्रतिबन्धकत्वेपि तद्विशेषणद्वयमावश्यकम् अन्यथा तत्कल्पे प्रागुक्तविषयताशून्यत्वमेव निश्चये
विशेषणं न तूक्तविशेषणद्वयं तादृशविषयतावैशिष्ट्यञ्च तादात्म्यावच्छिन्नत्वान्यतरसम्बन्धेन तथाच ह्र-
दो वह्न्यभाववानिति–ज्ञानीयवह्निप्रकारतायास्तदवच्छेदकप्रतियोगिताविषयतायास्तन्निष्ठप्रतियोगिता-
त्वादिविषयतायाश्च प्रतिबन्धकतावच्छेदकत्वात् ह्रदादिनिरवच्छिन्नविशेष्यतायास्तदवच्छिन्नत्वाच्च त-
ज्ज्ञानीयविषयताकापि तादृशविषयताविशिष्टान्येति नाव्याप्तिः असंग्राह्यविशिष्टविषयकज्ञानीयवृत्ति-
त्वादिविषयिता तादृशविषयताविशिष्टान्येति तद्वारणान्नातिव्याप्तिरपि । नच गगनाभाववदभावव-

त्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः तादृशबाधज्ञानस्य गगनाभाववदभाववत्त्वविशिष्टविषय-कज्ञानविशिष्टाभाववद्गगनाभाववदभाववत्कालीनघटत्वविशिष्टविषयकज्ञानत्वेनैव प्रतिबन्धकतया बाध-ज्ञानीयपक्षविशेषणतापन्नाभावविशेषणतापन्नगगनगगनत्वविषयतादीनां प्रतिबन्धकतानवच्छेदकतया त-च्छून्यत्वस्य तादृशबाधज्ञानेऽभावादिति वाच्यम्। प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रति-

१ रूपाभाववदभाववत्कालीनघटे संयोगेन रूपसाधने बाधेऽव्याप्तिः तेन प्रागुक्तबाधज्ञानीयपक्षतावच्छेदककुक्षिप्रविष्टगगनप्रकारतायाः प्रतिबन्धकतावच्छेदकतया पक्षविशेषणतापन्नाभावविशेषणतापन्नगगनविषयतायास्तदवच्छिन्नत्वेपि नोक्तदोषानवकाशशङ्कावकाशः।

बध्यतानवच्छेदकत्वस्यापि तादृशविषयताविशेषणत्वात् तादृशबाधज्ञानीयगगनादिविषयतानां प्रतिबन्धकतानवच्छेदकत्वेपि तादृशानुमितेर्गगनाभाववदभाववत्कालीनघटो गगनाभाववानिति बुद्धिं प्रति गगनत्वावच्छिन्नप्रकारतानिरूपिततादृशघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतायां गगनगगनत्वादिविषयतानामवच्छेदकतया तदनवच्छेदकविषयताशून्यत्वस्य तत्र सत्त्वेनाव्याप्तिविरहात् । नचैवमपि वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदेऽतिव्याप्तिः तादृशविशिष्टविषयकज्ञानीयतादृशविशिष्टह्रदांशे प्रकारतावच्छेदककुक्षिप्रविष्टवृत्तित्वादिविषयतानां तादृशानुमितित्वव्यापकवि-



शिष्टपक्षे साध्यवैशिष्ट्यावगाहित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानवच्छेदकत्वेपि तादृशानुमितेः वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभाववान् इति ज्ञानविशिष्टवह्निमान् तादृशह्रद इति ज्ञानत्वेन तादृशह्रदो वह्न्यभाववज्जलवद्वृत्तिजलवानिति बुद्धित्वावच्छिन्नंप्रति प्रतिबन्धकतया तादृशानुमितित्वव्यापकतादृशप्रतिबन्धकतानिरूपिततादृशप्रंतिबध्यतानवच्छेदकत्वस्य तादृशवृत्तित्वादिविषयतास्वभावेन तथाविधोदासीनविषयताशून्यत्वस्य तादृशविशिष्टज्ञानेऽक्षतत्वादिति वाच्यम् । प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेशनीयत्वात् प्रकृते तादृशानुमितित्वव्यापकोक्तप्रतिबन्धकतायाः ज्ञानवैशिष्ट्यावच्छिन्नतया तद-

न्यबाधबुद्ध्यादिनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतायां तादृशवृत्तित्वादिविषयतानामनवच्छेद-
कतया तच्छून्यत्वस्य तादृशविशिष्टविषयकज्ञाने सत्त्वेनातिव्याप्तिविरहात् । नचैवं कपिसंयोगा-
भावाऽभाववत्कपिसंयोगवत्कालीनकपिसंयोगाभाववदभाववत्कालीनगुणः कपिसंयोगवानित्यत्र बाधेऽ-
व्याप्तिः तादृशबाधनिश्चयस्य पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति अभाववान् क-
पिसंयोगाभाववान् अभाववान् तादृशगुण इति ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्प्र-
तिबन्धकतावच्छेदककुक्षौ पक्षविशेषणतापन्नाभावविशेषणतापन्नबाधज्ञानीयकपिसंयोगतत्संयोगत्वादि-
विषयतानामप्रवेशेन तादृशप्रतिबन्धकतानवच्छेदकत्वात् कपिसंयोगवान् तादृशगुण इत्यनुमितेर-

पि तादृशबुद्धिं प्रति कपिसंयोगवान् कपिसंयोगाभावाभाववान् कपिसंयोगवान् तादृशगुण इति ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशानुमितित्वव्यापकज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता-निरूपितप्रतिबध्यतानवच्छेदकत्वाच्च तच्छून्यत्वस्य तादृशबाधज्ञानेऽसत्त्वादिति वाच्यम् । प्र-कृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमनिवेश्य विशेष्यदलघटकप्रतिबध्य-ताविशिष्टनिश्चयत्वव्यापकत्वस्य निवेशनीयत्वात् निश्चये प्रतिबध्यतावैशिष्ट्यञ्च स्वाश्रयत्व-स्वनि-रूपितमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताविशिष्टविशेष्यताकाऽव्याप्यवृत्ति-त्वज्ञानाभाववत्त्वोभयसम्बन्धेन विशेष्यतायां प्रकारतावैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्व-स्वावच्छे-

दकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वान्यतरसम्बन्धेन तथाचोक्त-
स्थले वह्न्यभाववज्जलवद्वृत्तिजलवत्ताहशह्रदे नातिव्याप्तिः ताहशह्रदो वह्न्यभाववज्जलवद्वृत्तिजल-
वानिति ज्ञानं प्रति ताहशानुमितेर्या प्रतिबन्धकता तस्यास्ताहशप्रतिबध्यताविशिष्टनिश्चयत्वव्याप-
कत्वविरहात् वह्निमति वह्न्यभाववज्जलवद्वृत्तिजलाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीने वह्निमान् ताह-
शह्रद इति निश्चये निरुक्तोभयसम्बन्धेन प्रतिबध्यतावति ताहशप्रतिबन्धकताया अभावात् त-
द्व्यापकीभूताऽन्यैव प्रतिबन्धकता तन्निरूपितप्रतिबध्यताऽनवच्छेदकत्वस्य ताहशवृत्तित्वादिविषय-
तायां सत्त्वात् तच्छून्यत्वस्य ताहशविशिष्टज्ञानेऽसत्त्वेनोक्तातिव्याप्तेर्नावकाशः एवं कपिसंयोगाभा-

ववत्कपिसंयोगाभावाभाववत्कपिसंयोगवत्कालीनकपिसंयोगाभाववदभाववत्कालीनगुणात्मकबाधे ना-
व्याप्तिः कपिसंयोगवति कपिसंयोगाभावाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीने ताहशसाध्यवत्पक्षविष-
यकनिश्चये निरुक्तोभयसम्बन्धेन विशेष्यदलघटकप्रतिबध्यता नास्त्येव तन्निरूपितताहशगुणत्वाव-
च्छिन्नमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावति या कपिसंयोगत्वावच्छिन्नप्रकारता त-
दवच्छेदककपिसंयोगत्वावच्छिन्नाभावाभावत्वावच्छिन्नविशेष्यताकाऽव्याप्यवृत्तित्वज्ञानवत्त्वस्य तत्र स-
त्त्वात् अतस्ताहशप्रतिबध्यतावन्निश्चयस्ताहशाव्याप्यवृत्तित्वज्ञानाभावकालीन एवेति तत्र च ताहश-
बाधबुद्धिनिरूपितप्रतिबन्धकतायाः सत्त्वात् ताहशबाधज्ञानीयकसंयोगीयविषयतायास्ताहशप्रतिबध्य-

तावच्छेदकतया तदनवच्छेदकविषयताशून्यत्वस्य तत्राक्षतत्वात् । नचैवमपि ह्रदो वह्निमान् वह्न्यभाववज्जलवत्कालीनत्वाभाववज्जलकालीनजलाभावादित्यत्र वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः तादृशविशिष्टविषयकज्ञानीयविषयतानां सर्वासामपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात् तज्ज्ञानीयकालीनत्वविषयताया अपि हेत्वप्रसिद्धिज्ञानीयप्रतिबन्धकतावच्छेदकत्वादिति वाच्यम् । उक्तान्यतरसंबन्धेन स्वावच्छेदकविषयताविशिष्टान्या या स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकीभूता विषयता तच्छून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकतेति लक्षणकरणात् उक्तातिव्याप्तेर-

भावात् तत्रहि साध्यवत्पक्षाविषयकबुद्धिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय लक्षणसत्त्वमुपपादनीयम् तादृशप्रतिबन्धकतानवच्छेदकत्वस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टवह्न्यभावऽव्याप्यवृत्तित्वज्ञानाऽकालीनह्रदो वह्निमानिति निश्चयत्वव्यापिका या ह्रदो वह्न्यभाववानिति बुद्ध्यादिनिरूपितप्रतिबन्धकता तान्निरूपितप्रतिबध्यतानवच्छेदकत्वस्य च कालीनत्वविषयितायां सत्त्वात् तादृशविषयताशून्यत्वस्योक्तविशिष्टज्ञानेऽभावात् तदनुगमश्च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टावच्छेदकं[1]तानिरूपितावच्छेदकं[2]तानिरूपितावच्छिन्नत्वसम्बन्धाव-

१ निश्चये । २ विषयतायाम् ।

च्छिन्नावच्छेदकतावद्धर्मवत्त्वं लक्षणम् अवच्छेदकतायां प्रतिबन्धकतावैशिष्टयञ्च स्ववृत्तियः कि-
ञ्चिन्निरूपितावच्छेदकतावद्विषयताविशिष्टान्यकिञ्चिन्निरूपितप्रतिबध्यताविशिष्टनिश्चयानिष्ठभेदप्रतियोगि-
तावच्छेदकत्वाभाववत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकान्यविषयताशून्यकिञ्चिद्रूपावच्छिन्नवि-
षयताशालिनिश्चयानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोभावस्तन्निरूपितप्रतियोगिता-
निरूपितावच्छेदकं[1]तानिरूपितावच्छेदकं[2]तानिरूपितावच्छेदकं[3]तानिरूपितत्व—स्वविशिष्टविषयत्वनिष्ठाऽव-
च्छेदकतानिरूपकशून्यत्वनिष्ठावच्छेदकतानिरूपकत्वोभयसंबन्धेन विषयत्वनिष्ठावच्छेदकतायां स्ववैशि-

१ प्रतियोगितायाम् । २ भेदे । ३ वृत्तित्वे ।

ष्टयंच स्वनिष्ठावच्छेदकतानिरूपकावच्छेदं[1]कतानिरूपकावच्छेदकं[2]तानिरूपकतादात्म्यावच्छिन्नत्वान्यत-
रसंबन्धावच्छिन्नावच्छेदं[3]कतानिरूपकावच्छेदं[4]कतानिरूपकावच्छेदकं[5]तानिरूपकत्व—स्वनिष्ठावच्छेदकता-
निरूपकावच्छेदं[6]कतानिरूपकोक्तोभयसंबन्धावच्छिन्नावच्छेदं[7]कतानिरूपकावच्छेदं[8]कतानिरूपकावच्छेदं[9]-
कतानिरूपकाव[10]च्छेदकतानिरूपकाव[11]च्छेदकतानिरूपकाव[12]च्छेदकतानिरूपकाव[13]च्छेदकतानिरूपकाव[14]च्छे-

१ निरूपितत्वे । २ अवच्छेदकत्वे । ३ विषयितायाम् । ४ अधिकरणे । ५ भेदे । ६ निरूपितत्वे । ७ प्रतिबध्य-
तायाम् । ८ निश्चये । ९ वृत्तित्वे । १० भेदे । ११ प्रतियोगितायाम् । १२ अवच्छेदकत्वे । १३ अभावे ।
१४ प्रतिबन्धकत्वे ।

दकतानिरूपकावच्छेद[1]कतानिरूपकावच्छेद[2]कतानिरूपकावच्छेद[3]कतानिरूपकावच्छेद[4]कतानिरूपकाव--च्छेद[5]कतानिरूपकत्वोभयसंबन्धेनेति चेन्न । सर्वं गगनवदित्यत्र गगनाभाववद्घटादावव्याप्तेः तादृशबाधविषयकज्ञाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकीभूताया निरुक्तप्रतिबध्यतानवच्छेदकीभूतायाश्च समवायसमवायत्वादिविषयतायास्सत्त्वात् अवच्छिन्नत्व-तादात्म्याऽवच्छेद्यनिरूपितत्वा-ऽवच्छेद्यनिरूपितनिरूपितत्वान्यतमसम्बन्धेन प्रतिबन्धकतावच्छेदकविषयतावि-

१ निरूपितत्वे । २ प्रतिबध्यतायाम् । ३ अवच्छेदकत्वे । ४ अधिकरणे । ५ भेदे ।

शिष्टान्यत्वविवक्षणेन तत्संग्रहे मेयत्वविशिष्टव्यभिचारवारणाय विशिष्टान्तराघटितत्वं वह्न्यभाववज्जला-
दिमद्वृत्तिजलवद्ध्रदवारणाय विशिष्टद्वयाघटितत्वं चावश्यकमिति ध्येयम् ॥ श्रीः ॥

ननु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाऽव्यापकप्रतिबन्धकताशून्यानिश्चयीयय-
द्रूपावच्छिन्नविषयिताव्यापिका तादृशप्रतिबन्धकता तद्रूपवत्त्वं लक्षणमास्ताम् कृतं विशिष्टाऽन्तराघ-
टितत्वविशिष्टद्वयाऽघटितत्वविशेषणाभ्यां ह्रदो जात्यभाववानित्यत्र जातिमान् जातिमानिति निश्चये
तादृशप्रतिबन्धकताऽव्यापकप्रतिबन्धकताशून्ये प्रकृतानुमितिप्रतिबन्धकताविरहेण बाधाऽव्याप्तिवार-
णायाऽव्यापकविषयिताशून्यत्वंतु निवेशनीयम् । नचैवमसंभवः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरू-

पितावच्छेदकधर्मदर्शनादिप्रतिबन्धकत्वान्तराव्यापकतत्तद्दोषविषयकत्वावच्छिन्नप्रतिबन्धकताशून्यत्वस्य तत्तद्दोषविषयकनिश्चयेऽभावादिति वाच्यम् । यादृशप्रतिबन्धकतामादाय लक्षणं संगमनीयं तादृशप्रतिबन्धकताऽव्यापकप्रतिबन्धकताशून्यत्वस्य विवक्षणात् एवंच मेयत्वविशिष्टव्यभिचारनिश्चये व्यभिचारविषयकत्वावच्छिन्नप्रतिबन्धकताऽव्यापकव्यभिचारविशेष्यकमेयत्वाभावप्रकारकबुद्धिनिरूपितप्रतिबन्धकतायाः सत्त्वान्न तत्रातिव्याप्तिः एवं ह्रदो वह्निमानित्यनुमितिनिरूपितायाः जलवान् वह्न्यभाववानिति ज्ञानविशिष्टजलवान् ह्रद इति ज्ञाने वर्तमानाया ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया अव्यापकीभूताया वह्न्यभाववज्जलवद्वृत्तिजलाभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबन्धकता तच्छून्यत्वस्य तादृशविशिष्टविष-



यकनिश्चयेऽसत्त्वेन तादृशविशिष्टे नातिव्याप्तिः । नचैवं सर्वं गगनवदित्यत्र गगनाभाववद्घटपटादिरूपे बाधेऽव्याप्तिः सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिविषयकनिश्चयानामेकरूपेणैव प्रतिबन्धकतया तादृशप्रतिबन्धकताया गगनाभाववान् घट इत्यादिनिश्चयेषु सत्त्वेन तदधिकरणे गगनाभाववान् पट इति निश्चयेऽवर्तमानायाः घटो गगनवानिति ज्ञाननिरूपितायाः प्रतिबन्धकताया घटो गगनाभाववानिति दोषविषयकनिश्चये सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूतप्रतिबन्धकताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतायां विवक्षणीयत्वात् तथाच गगनाभाववद्घटत्वावच्छिन्न-

विषयित्वाऽव्यापकविषयिताशून्यताद्दशप्रतिबन्धकताधिकरणे घटो गगनाऽभाववानिति निश्चयेऽविद्यमा-
ना प्रतिबन्धकता न घटो गगनवानिति ज्ञाननिरूपिता अपितु पटो गगनवानिति ज्ञाननिरूपितेति तच्छून्य-
त्वस्य ताद्दशबाधादिनिश्चये सत्त्वात्, अत्रायमनुगमः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिब-
न्धकताविशिष्टावच्छेदकताविशिष्टरूपवत्त्वं लक्षणम् अवच्छेदकतायां प्रतिबन्धकतावैशिष्टचंच स्वनिष्ठ-
किंचिद्धर्मावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकप्रतिबन्धक-
ताशून्यकिंचिद्रूपावच्छिन्नविषयिताऽव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभे-

दप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेद[1]कतानिरूपितावच्छेद[2]कतानिरूपिताव[3]च्छेदकतानिरूपितत्व--स्वनिष्ठावच्छेद[4]कतानिरूपकावच्छेद[5]कतानिरूपकावच्छेद[6]कतानिरूपकावच्छेद[7]कतानिरूपकावच्छेद[8]कतानिरूपकावच्छेद[9]कतानिरूपकावच्छेद[10]कतानिरूपकत्वोभयसंबन्धेन रूपे अवच्छेदकतावैशिष्ट्यंच स्वनिरूपितावच्छेद[11]कतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्ना-

---

१ प्रतियोगित्वे। २ भेदे। ३ वृत्तित्वे। ४ अधिकरणे। ५ वृत्तित्वे। ६ भेदे। ७ प्रतियोगित्वे। ८ अवच्छेदकत्वे। ९ प्रतिबन्धकत्वे। १० शून्यत्वे। ११ विषयित्वे।

वच्छेदकतावत्त्व—स्वनिरूपितावच्छेद[1]कतानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेद[4]-कतानिरूपितावच्छेद[5]कतानिरूपितावच्छेद[6]कतानिरूपितावच्छेदक[7]तानिरूपितावच्छेद[8]कतानिरूपिताव-च्छेदक[9]तानिरूपितावच्छेद[10]कतानिरूपितावच्छेद[11]कतानिरूपितावच्छेद[12]कतानिरूपितावच्छेद[13]कतानिरूपि-तावच्छेद[14]कतानिरूपितावच्छेद[15]कतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वोभयसंबन्धेनेति



१ शून्यत्वे। २ प्रतिबन्धकत्वे। ३ अवच्छेदकत्वे। ४ प्रतियोगित्वे। ५ भेदे। ६ वृत्तित्वे। ७ निश्चये। ८ शून्यत्वे। ९ विषयितायाम्। १० अवच्छेदकत्वे। ११ प्रतियोगित्वे। १२ भेदे। १३ वृत्तित्वे। १४ अधिकरणे। १५ विषयित्वे।



चेन्न। गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्त्यापत्तेः तत्र बाधनिश्चये तादृशा-नुमितिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताद्वयी एका अभाववान् गगनाभाववानिति निश्चय-विशिष्टगगनाभाववान् तादृशघट इति निश्चयत्वावच्छिन्ना अपरा गगनाभाववान् तादृशघट इति नि-श्चयविशिष्टाऽभाववान् गगनाभाववानिति निश्चयत्वावच्छिन्ना तत्र प्रथमप्रतिबन्धकतामादाय ल-क्षणं संगमनीयम् तादृशप्रतिबन्धकतावति अभाववान् गगनाभाववदभाववत्कालीनघट इति नि-श्चये तादृशघटत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्येऽवर्तमानाया गगनाभावस्तादृशघटावृत्तिरि-त्याकारकबुद्धिनिरूपितप्रतिबन्धकतायास्तादृशबाधज्ञाने सत्त्वात्। अथाव्यापकप्रतिबन्धकतायां प्र-

कृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयित्वानवच्छिन्नत्वं विशेषणं देयं विषयितायां प्रतिबन्धकतावैशिष्ट्यं स्वावच्छेदकत्व–स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापक-प्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वोभयसंबन्धेन प्रतिबध्यतावत्त्वंच स्वानवच्छेदकविषयताशून्यज्ञानीयत्वसंबन्धेन तथाच नोक्तबाधेऽव्याप्तिः तत्र बाधज्ञाने विद्यमानाया गगनाभावस्तादृशघटावृत्तिरिति ज्ञाननिरूपितप्रतिबन्धकतायास्तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावाच्छिन्न-प्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टतादृशघटविशेष्यकगगनप्रकारकनिश्चयत्वव्यापकसाध्याभाववत्पक्षविषयकबुद्धिनिरूपितप्रतिबन्धकतानिरूपिततादृशप्रतिबध्यतानवच्छेदकविषयताशून्यगगनाभावव-

त्ताद्दशघटज्ञानीयताद्दशघटत्वावच्छिन्नविषयित्वावच्छिन्नतया तदन्यप्रतिबन्धकताया एव ताद्दशत्वात् तच्छून्यत्वस्य तत्राक्षतत्वात् । नच गगनाभाववत्ताद्दशघटत्वावच्छिन्नविषयिताया निरुक्तप्रतिबन्धकतावच्छेदकत्वाभावेन तदवच्छिन्नत्वं नोक्तप्रतिबन्धकताव्यावर्तकामिति वाच्यम् । ताद्दशविषयिताया अप्यभाववद्वृत्विषयितात्वेन ताद्दशप्रतिबन्धकतावच्छेदकत्वात् वह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इति ज्ञानीयजलवद्ध्रदविषयिताया ह्रदो वह्निमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदिकायास्ताद्दशप्रातिबन्धकताऽव्यापकीभूतताद्दशजलाभाववान्ह्रद इति ज्ञाननिरूपितप्रतिबन्धकतावच्छेदकत्वेपि ताद्दशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकपक्षे सा-

ध्याभाववगाहिबुद्धिनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयिताशून्यज्ञानीयत्वाभावेन तादृशप्रतिबन्धकतासंग्रहः एवं प्रकृतानुमितित्वव्यापकव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताऽव्यापकीभूतमेयत्वाभाववान् व्यभिचार इति ज्ञाननिरूपितप्रतिबन्धकतायास्तादृशप्रतिबन्धकतानिरूपितव्याप्तिग्रहत्वाऽवच्छिन्नप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितसाध्याभाववद्वृत्तित्वप्रकारकहेतुविशेष्यकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकविषयताशून्यशुद्धव्यभिचारविषयकज्ञानीयविषयित्वानवच्छिन्नतया तत्संग्रह इति चेन्न । तथाप्यभावो गगनत्ववानाधेयत्वादित्यत्र असाधारण्येऽव्याप्तेः तत्र गगनत्वव्यापकाभावप्रतियोग्याधेयत्वमिति असाधारण्यविषयकनिश्चयोत्तरमाधेयत्व- ॥ १३९ ॥

वानभाव इति ज्ञाने तादृशासाधारण्यविषयित्वाऽव्यापकविषयिताशून्ये प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्यवर्तमानाया गगनत्वव्यापकाभावप्रतियोगित्वाभाववदाधेयत्वमिति ज्ञाननिरूपितायाः प्रतिबन्धकतायास्तादृशासाधारण्यज्ञाने सत्त्वात् । नच अव्यापकप्रतिबन्धकतायामसाधारण्यविषयकत्वानवच्छिन्नत्वमपि विशेषणं विवक्षितं वस्तुतस्तत्रापि पक्षधर्मिकहेतुमत्ताज्ञानविशिष्टासाधारण्यविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय लक्षणसमन्वयसंभवः तादृशप्रतिबन्धकतावन्नाधेयत्ववानभाव इति ज्ञानं किंतु असाधारण्यज्ञानं तत्रच न पूर्वोक्तप्रतिबन्धकत्वाभावो वर्तत इति नाऽव्याप्तिरिति वाच्यम् । तथापि वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र

सत्प्रतिपक्षेऽव्याप्तेः तत्र विशिष्टसत्प्रतिपक्षज्ञानोत्तरजाते तादृशसत्प्रतिपक्षविषयित्वाऽव्यापकविषयिता-शून्ये वह्न्यभाववान् वह्न्यभावव्याप्यवानिति ज्ञाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रति-बन्धकतावत्यविद्यमानाया वह्न्यभावव्याप्याभाववांस्तादृशह्रद इति ज्ञाननिरूपितायाः प्रतिबन्धकता-या विशिष्टसत्प्रतिपक्षनिश्चये सत्त्वात् । नच तत्रापि तादृशप्रतिबन्धकतामादाय लक्षणासंभवेपि प्रति-बन्धकत्वान्तरमादाय लक्षणं संगमनीयं तत्रहि कालिकसंबन्धेन वह्न्यभावाभाववदवृत्तिधर्मवान् स-मवायादिना वह्न्यभावाभाववदवृत्तिधर्मवानित्यादिज्ञानानामेकरूपेण प्रतिबन्धकत्वं कल्पनीयं सम्ब-न्धभेदेन प्रतिबध्यप्रतिबन्धकभा कल्पने गौरवात्, प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्य-

तानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावाभाववद्वृत्तितात्वावच्छिन्नप्र-
कारताविशिष्टप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वमिति, प्रकार-
तायां प्रकारतावैशिष्ट्यंच स्वनिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सम्बन्धाव-
च्छिन्नत्व-स्वनिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वोभय--
सम्बन्धेन एतादृशप्रतिबन्धकताच प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपिता सत्प्रतिपक्षविषयकनिश्चय
एव न तदुत्तरप्रागुक्तज्ञान इति तदव्यापकप्रतिबन्धकताशून्यत्वं तत्राक्षतमेव । नच नानासम्बन्धाव-
गाहिव्याप्यदर्शनानामेकरूपेण प्रतिबन्धकत्वे संयोगेन धूमाभाववदवृत्तिमानित्यादिनिश्चयत्वावच्छिन्नप्र-

तिबन्धकताया ऐक्यात् तादृशप्रतिबन्धकतावति संयोगेन तादृशधर्मावगाहिनिश्चये समवायेन तादृश-
धर्माभावावगाहिज्ञानप्रतिबन्धकताया असत्त्वेन तादृशप्रतिबन्धकताशून्यत्वस्य समवायेन तदवगाहि-
सत्प्रतिपक्षनिश्चयेऽसत्त्वेन एवं चालनीन्यायेन सर्वेषु सत्प्रतिपक्षनिश्चयेष्वव्यापकप्रतिबन्धकताशून्यत्वा-
भावाच्च कथं लक्षणसमन्वय इति वक्तव्यं यत्र यादृशसम्बन्धघटितस्सत्प्रतिपक्षस्तादृशसत्प्रतिपक्षविषयि-
त्वाऽव्यापकविषयिताशून्यतत्प्रतिबन्धकतावांस्तादृशसंबन्धघटितसत्प्रतिपक्षनिश्चय एवेति तत्राविद्यमा-
नप्रतिबन्धकता संबन्धान्तरेण तादृशधर्माभावावगाहिज्ञाननिरूपितप्रतिबन्धकतैव तच्छून्यत्वं तत्र
तत्राक्षतमेवेति लक्षणसमन्वयादिति वाच्यम् । तथापि ह्रदो वह्निमानित्यत्र वह्न्यभाववद्वह्न्यभाववद्ध्रदे-



ऽतिव्याप्तेः तत्र वह्न्यभाववान् वह्न्यभाववान् ह्रद इति निश्चये विद्यमानाया अभाववान् ह्रदो व-
ह्निमानिति ज्ञाननिरूपिताया वह्न्यभाववह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नायाः प्रतिब-
न्धकताया वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यतादृशप्रतिबन्धकतावद्ध्रदो वह्न्य-
भाववानिति निश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वेपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितबा-
धविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूता या तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टह्र-
दो वह्निमानिति निश्चयत्वव्यापकप्रतिबन्धकतानिरूपितवह्न्यभाववद्ध्रदविषयकबुद्धित्वावच्छिन्नप्रतिब-
ध्यताऽनवच्छेदकविषयताशून्यवह्न्यभाववान् वह्न्यभाववान् ह्रद इति निश्चयीयविषयिता तदनवच्छिन्न-

त्वाभावेन तत्सत्त्वस्याकिंचित्करत्वात् वह्न्यभाववह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताच बाधप्रतिब-न्धकतायां वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वेनावच्छेदिकैव अतो विशिष्टान्तराऽघटितत्वमावश्य-कम्। नच तथापि विशिष्टद्वयाऽघटितत्वाऽनिवेशेन लाघवमपरिहार्यमिति वाच्यम्। एतादृशगुरुविशे-षणापेक्षया तस्यैव लघुत्वादिति ध्येयम् ॥ श्रीः ॥

ननु अवच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व–स्वरूपोभयसम्बन्धेन यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं लक्षणम् इदा-नीं विशिष्टद्वयाऽघटितत्वं न विवक्षणीयम् वह्न्यभाववद्ध्रदादिविषयकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेन

प्रतिबन्धकत्वाभावेन तत्र तादृशप्रतिबन्धकत्वस्यावच्छेदकतासम्बन्धेनाभावात् स्वरूपसम्बन्धेन स-त्त्वाच्च लक्षणसमन्वयः वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रति-बन्धकतया तत्र ज्ञाने तादृशप्रतिबन्धकतावच्छेदकत्वसत्त्वात् नातिव्याप्तिः प्रथमसम्बन्धमात्रेण व्यापक-त्वविवक्षणे ह्रदो वह्निमानित्यत्र घटादिष्वतिव्याप्तिर्घटादिनिश्चयेपि तादृशप्रतिबन्धकतावच्छेदकतावि-रहात् स्वरूपसंबन्धमात्रेण व्यापकत्वविवक्षणे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेतिव्याप्तिः अत उभसंबन्धेन व्यापकत्वं विवक्षितम्, अथ बाधादिज्ञानस्यात्मनि दैशिकाव्याप्यवृत्तितया तदभावस्यानुमितिकारणत्वे बाधनिश्चयकालेपि किञ्चिदवच्छेदेनात्मनि तदभावस्य सत्त्वेनानुमितिवारणाय बाधादिज्ञानवदात्मत्वादेरनु-

मितिप्रतिबन्धकत्वं व्याप्त्यनुगममथुरानाथीये उक्तं तन्[1]मते बाधादिदोषनिश्चये सर्वत्र प्रतिबन्धकतावच्छे-
दकत्वस्य सत्त्वेनाऽसम्भवः एवं साक्षादवच्छेदकताया व्यासज्यवृत्तित्वानङ्गीकर्तृ[2]मते ज्ञानविशिष्टज्ञानीय-
विषयितावत्त्वेनैव प्रतिबन्धकतया तादृशज्ञानविशिष्टज्ञाने प्रतिबन्धकतावच्छेदकत्वविरहेणातिव्याप्तिश्च ।
नच स्वनिरूपितावच्छेदकतानिरूपितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभे-
दवत्त्व–स्वरूपोभयसम्बन्धेन व्यापकत्वं विवक्षणीयम् तथाच नासम्भवातिव्याप्ती बाधादिज्ञानवि-

१ बाधादिनिश्चयविशिष्टात्मत्वं प्रतिबन्धकम् । २ बाधादिज्ञानीयविषयितावत्त्वेन प्रतिबन्धकत्वम् ।

शिष्टात्मत्वादेः प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वस्य बाधादिनिश्चयेष्वभावात् मता-
न्तरेपि वारणीयविशिष्टविषयकनिश्चये प्रतिबन्धकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छे-
दकत्वस्य सत्त्वादिति वाच्यम् । निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वमतेऽतिव्याप्त्यापत्तेः तादृ-
शनिश्चये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतावच्छेदकताया अभावादिति चेन्न । स्वनिरूपि-
तावच्छेदकताविशिष्टावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व–स्वरूपो-
भयसम्बन्धेन व्यापकत्वस्य विवक्षितत्वात् अवच्छेदकतायामवच्छेदकतावैशिष्ट्यञ्च स्वभिन्नत्व–स्व-

१ बाधादिनिश्चयत्वेन प्रतिबन्धकत्वम् ।

सा० नि० ॥ १४० ॥

विशिष्टनिरूपितत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वनिरूपकत्व-स्वनिरूपितत्व-स्वनिरूपकनिरूपि-
तत्वैतदन्यतमसम्बन्धेन प्रथमसम्बन्धद्वयघटकप्रथमसम्बन्धानुपादाने प्रथममतेऽसम्भवः बाधादिनि-
श्चयनिष्ठावच्छेदकतायां द्वितीयवैशिष्ट्यघटकान्यतमघटकस्वनिरूपकत्वसम्बन्धेन स्वनिष्ठप्रतिबन्धक-
तानिरूपितत्वस्य सत्त्वात्, द्वितीयसम्बन्धाऽनिवेशे प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रति-
बन्धकत्वान्तरावच्छेदकताभिन्नत्वस्य तत्र सत्त्वात्तन्मते स एव दोषः, एवं द्वितीयवैशिष्ट्यघटकप्रथ-
मसम्बन्धानिवेशे तृतीयमतेऽतिव्याप्तिः निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतया तन्निरूपितानिश्चय-
त्वादिनिष्ठावच्छेदकताभिन्नत्वस्य निश्चयनिष्ठावच्छेदकतायां सत्त्वेपि तन्निरूपितनिरूपितत्वतन्निरूप-

विवेचना. ॥ १४० ॥

कनिरूपितत्वयोस्तन्निरूपकेऽभावात् तन्निवेशे तन्निरूपकप्रतिबन्धकतानिरूपितत्वस्य सत्त्वात्तत्संग्रहा-
न्नातिव्याप्तिः, द्वितीयसम्बन्धाऽनिवेशे द्वितीयमतेऽतिव्याप्तिः प्राथमिकनिश्चयनिष्ठावच्छेदकतायां विष-
यतानिष्ठावच्छेदकताभिन्नत्वसत्त्वेपि तन्निरूपकनिरूपितत्वस्य तन्निरूपकनिरूपितनिरूपितत्वस्य चा-
भावात् तन्निवेशे तन्निरूपितद्वितीयानिश्चयनिष्ठावच्छेदकतानिरूपितत्वसत्त्वान्नातिव्याप्तिः । नच द्वि-
तीयनिश्चयनिष्ठावच्छेदकतामादायैव तत्रातिव्याप्तिवारणं शक्यमिति वाच्यम् । तन्मत एव बाधनि-
श्चयादौ तादृशप्रतिबन्धकतानिरूपितविषयितानिष्ठावच्छेदकताभिन्नतन्निरूपकप्रतिबन्धकतानिरूपित-
त्व-स्वनिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतासत्त्वादसम्भववारणाय द्वितीयावच्छेदकतायां नि-

 रूपितत्वसम्बन्धानवच्छिन्नत्वस्य वक्तव्यतया द्वितीयनिश्चयनिष्ठावच्छेदकताया अतादृशत्वात्, तृती- 
 यसम्बन्धानिवेशे प्रथममतेऽतिव्याप्तिः प्रथमनिश्चयनिष्ठावच्छेदकतायां द्वितीयनिश्चयनिष्ठावच्छेदकता-
निरूपकनिरूपितत्वस्य तन्निरूपितनिरूपितत्वस्य चाभावात् तन्निवेशे तन्निरूपकप्रतिबन्धकता-
निरूपितस्वनिरूपितत्वात्तत्संग्रह इति नातिव्याप्तिः, एवञ्च न कुत्रापि मते दोष इति गुरुभूतवि-
शिष्टद्वयाऽघटितत्वं न निवेशनीयम् । नच गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽ-
व्याप्तिः तादृशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्र प्रकृतप्रतिबन्धकतानिरूपित- 
द्वितीयनिश्चयादिनिष्ठावच्छेदकताविशिष्टावच्छेदकतायाः सत्त्वादिति वाच्यम् । प्रकृतानुमितित्वव्या-

पकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयताशून्यज्ञानवृत्तित्वेन द्वितीयावच्छेदकताया विशेषणी-
यत्वात् प्रतिबन्धकतावैशिष्ट्यञ्च विषयितायां स्वावच्छेदकत्व-स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्व-
व्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयताशून्यज्ञानीयत्वोभयसम्बन्धेन प्रतिबध्यतानव-
च्छेदकत्वञ्च प्रतिबध्यतावच्छेदकविषयताविशिष्टान्यत्वं तथाचोक्तबाधज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्र-
तिबन्धकतावच्छेदकीभूता या तादृशप्रतिबन्धकता निरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकसा-
ध्यप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितसाध्याभाववत्पक्षविषय-
कत्वावच्छिन्नप्रतिबध्यतावच्छेदकविषयताविशिष्टान्यविषयताशून्यतादृशबाधज्ञानीयविषयता तच्छून्यत्व-

स्याभावेन तत्राव्याप्तिविरहात् । नचैवमपि अभावो गगनत्ववानाधेयत्वादित्यत्रासाधारण्येऽव्याप्तिः तज्ज्ञानस्य ज्ञानाविशिष्टज्ञानत्वेन प्रतिबन्धकतया तत्र तादृशप्रतिबन्धकतानिरूपितावच्छेदकतायाः सत्त्वात् तादृशप्रतिबन्धकताविशिष्टविषयताशून्यत्वस्यच सत्त्वादिति वाच्यम्। असाधारण्यविषयिताशालिज्ञानावृत्तित्वेनापि विशेषणीयत्वात् । नचैवमपि निरवच्छिन्नसाध्याभाववत्पक्षस्य बाधत्वमते गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः तज्ज्ञानीयनिरवच्छिन्नत्वविषयतायाः प्रतिबन्धकतानवच्छेदकतया तच्छून्यज्ञानीयविषयताशून्यत्वस्य तादृशबाधज्ञाने सत्त्वात् विषयतायां प्रतिबन्धकतावैशिष्ट्यानियामकसंबन्धघटकप्रतिबध्यतानवच्छेदकविषयतायां निरवच्छिन्नत्वघटकविषयताभेदस्य विशेषणत्वमङ्गीकृत्य

तद्दोषवारणेऽपि गगनमवच्छिन्नत्ववत् अभाववच्छब्दवद्वृत्तिशब्दाभावादित्यत्र निरवच्छिन्नशब्दवद्वृत्तिशब्द-
वद्गगनेऽतिव्याप्तिः तत्र साध्यवत्पक्षाविषयकबुद्धित्वावच्छिन्ननिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता-
यां निरुक्तोभयसंबन्धेन तादृशनिश्चयत्वव्यापकत्वस्य सत्त्वात् तादृशनिश्चये तादृशप्रतिबन्धकता-
निरूपितावच्छेदकताविशिष्टावच्छेदकत्वस्य सत्त्वेपि नहि तज्ज्ञानं प्रकृतानुमितित्वव्यापकप्रतिबध्यता-
निरूपितप्रतिबन्धकताविशिष्टविषयिताशून्यं तज्ज्ञानीयविषयतायां सर्वत्र प्रकृतानुमितित्वव्यापकप्र-
तिबध्यतानिरूपितहेत्वभाववत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य तादृशप्रतिब-
न्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकहेतुमत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानि-

रूपितप्रतिबध्यतावच्छेदकविषयताविशिष्टान्यनिरवच्छिन्नत्वघटकविषयताभिन्नविषयताशून्यज्ञानीयत्वस्यच सत्त्वात् तच्छून्यत्वस्य तादृशविशिष्टज्ञाने अभावात् इति वाच्यम्। स्वविशिष्टविषयिताशून्यज्ञानवृत्तिस्वनिरूपितावच्छेदकताविशिष्टावच्छेदकतासंबन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्व–स्वरूपोभयसंबन्धेन व्यापकत्वस्य विवक्षणीयत्वात्, विषयितायां स्ववैशिष्टचंच स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकविषयताशून्यज्ञानीयत्वसंबन्धेन तथाच नोक्तविशिष्टेऽतिव्याप्तिः तज्ज्ञाने स्वपदग्राह्यसाध्यवत्पक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्टचावच्छिन्नप्रतिबन्धकतानिरूपिततादृशप्रतिबध्यताविशिष्टनिश्चयत्वव्याप-



कसाध्यवत्पक्षविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितसाध्याभाववत्पक्षविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतानवच्छेदकवृत्तित्वादिविषयताशून्यबाधज्ञानीयविषयिताशून्यत्वस्य सत्त्वात्तादृशावच्छेदकतासंबन्धेन निरुक्तप्रतिबन्धकतायास्तत्र सत्त्वात् इति चेन्न । विशिष्टद्वयाऽघटितत्वनिवेशापेक्षयोक्तनिवेशस्यातिगुरुत्वात्, एवं निरवच्छिन्नसाध्याभाववत्पक्षस्य बाधतामते उक्तबाधसंग्रहाय तादृशप्रतिबन्धकतावैशिष्टचघटकप्रतिबध्यतानवच्छेदकविषयतायां निरवच्छिन्नत्वघटकविषयताभेदस्य निवेशनीयतया तत्र घटकत्वनिर्वचनस्यच गुरुत्वात् इति ध्येयमिति दिक् ॥ श्रीः ॥

सत्प्रतिपक्षघटकदलद्वयविषयिताभिन्ननिरुक्तविशिष्टद्वयविषयिताशू-
न्यत्वस्य विशिष्टद्वयाघटितत्वपदार्थत्वादिति ॥

तथाच यादृशविशिष्टविषयकानिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिसत्प्रतिपक्षघटकदलद्वयविषयिताभिन्नतादृशविशिष्टद्वयाविषयिताशून्यत्वं निश्चयविशेषणम् । नन्वेवमपि प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षे कथं लक्षणसमन्वयः तत्र विशिष्टान्तराऽघटितत्वस्याभावात् तथाहि तादृशसत्प्रतिपक्षज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया जलव्यापकवह्न्यभावसमानाधिकरणजलवान्ह्रद इति ज्ञानस्यैव जलव्यापक-

वह्न्यभावाधिकरणनिरूपितवज्जलवान् ह्रद इति ज्ञानस्यापि प्रतिबन्धकतया जलव्यापकवह्न्यभावाधिकर-
णनिरूपितवज्जलवद्ध्रदत्वविशिष्टाऽघटितत्वाभावात्। नच सत्प्रतिपक्षविषयिताभिन्नत्वं विशिष्टान्तरवि-
षयितायां विशेषणं देयं तथाच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृतानुमितिप्रतिब-
न्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं सत्प्रतिपक्षविषयताभिन्नतद्रूपावच्छिन्नविषयताशून्यत्वं
निश्चयविशेषणम् तथाच नोक्ताव्याप्तिरिति वाच्यम्। मेयत्वविशिष्टतादृशसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः शु-
द्धसत्प्रतिपक्षस्य विशिष्टान्तरत्वेपि तद्विषयताभिन्नत्वाभावात् इति चेन्न। सत्प्रतिपक्षविषयिताऽव्यापक-
विषयिताशून्यज्ञानीयसत्प्रतिपक्षविषयताभेदस्य विशिष्टान्तरविषयितायां विवक्षितत्वात् मेयत्वविशि-

ष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयतायां सत्प्रतिपक्षविषयित्वाऽव्यापकविषयिताशून्यशुद्धत-ज्ज्ञानीयतद्विषयताभेदस्य सत्त्वान्नातिव्याप्तिरिति दिक् ॥ श्रीः ॥

अनुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं तादृशं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छि-न्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नत्वं समुदितार्थ इति ॥ ॥ १४६ ॥

अत्र स्वाऽनवच्छिन्नप्रकारतावच्छेदकं यत्तादृशं रूपं तदनवच्छिन्नप्रकारतावच्छेदकरूपवत्त्वं विशि-ष्टान्तराघटितत्वमिति जगदीशोक्तादरेपि मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः मेयत्वविशिष्टव्यभिचा-रत्वानवच्छिन्नशुद्धव्यभिचारवानिति ज्ञानीयप्रकारतावच्छेदकव्यभिचारत्वाऽनवच्छिन्नप्रकारतावच्छेदक-त्वस्य तादृशव्यभिचारत्वेऽसंभवात् तथापि व्यभिचारकालीनघटादावतिव्याप्तिः तादृशघटत्वाव-च्छिन्नप्रकारत्वस्य व्यभिचारत्वानवच्छिन्नत्वात् स्वानवच्छिन्नप्रकारतावच्छेदकं यत्तादृशं रूपं तदव-च्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाविवक्षणेन तद्वारणे बाधाद्यसंग्रहः ह्रदो वह्न्यभाववानिति ज्ञाने तुल्यवित्तिवेद्यतया ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नस्य विषयतया वह्न्यभाववद्ध्रदत्वानवच्छिन्नप्रकारताव-च्छेदकह्रदवृत्तिवह्न्यभावत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वेऽभावात् अतः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं तादृशरूपे विवक्षणीयम् । नच साक्षात्परम्परा-

साधारणावच्छेदकत्वमङ्गीकृत्यैवैतल्लक्षणं कर्तव्यम् अन्यथा ह्रदो वह्निमानित्यत्र बाधादावव्याप्तिः तादृ-
शबाधज्ञानीयवह्न्यभाववद्ध्रदविषयितानिरूपितसाक्षादवच्छेदकतायाः वह्न्यभावह्रदत्वमात्रपर्याप्ततया
तद्गतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकनिरूपकतावच्छेदकताकविषयितायाः ह्रदोऽभाववानिति
ज्ञानेपि सत्त्वेन तत्र प्रतिबन्धकताविरहात्, साक्षात्परम्परासाधारणावच्छेदकतास्वीकारेतु तादृशबाध-
विषयितानिरूपकतावच्छेदकतायाः वह्निवह्नित्वाद्यन्तर्भावेणैव पर्याप्ततया तादृशसमुदायत्वावच्छिन्नानुयो-
गिताकपर्याप्तिकनिरूपकतावच्छेदकताकविषयितायाः ह्रदोऽभाववानिति ज्ञानेऽसत्त्वेन तत्संग्रहः, एवंचोक्त-
विवक्षायामपि न व्यभिचारकालीनघटेऽतिव्याप्तिः तादृशघटत्वावच्छिन्नप्रकारतायाः व्यभिचारत्वाव-

च्छिन्नत्वादिति वाच्यम् । विषयताप्रतियोगितादिनिष्ठावच्छेद्यताया विभिन्नतया मेयत्वविशिष्टव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकशुद्धव्यभिचारत्वानिरूपितप्रतियोगितानिष्ठावच्छेद्यताऽभाववत्प्रकारतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे सत्त्वेनातिव्याप्त्यापत्तिरतो विषयतानिष्ठावच्छेद्यत्वाभाव एव निवेशनीयः एवं चासंभवः वह्न्यभाववद्धृदत्वादिनिरूपितप्रतियोगितादिनिष्ठावच्छेद्यत्वाभाववत्प्रकारतानिरूपितावच्छेदकतावत्तद्धर्मानवच्छिन्नप्रकारतावच्छेदकत्वस्य तत्राभावादिति, प्रथममपि विषयतानिष्ठावच्छेद्यत्वाभाव एव निवेशनीय इति सूचनायोक्तविवक्षा, जगदीशस्याप्ययमेवाभिप्राय इति ध्येयम् ॥श्रीः॥

मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छिन्नविषयकप्रतीतौ दुर्घटत्वादिति ॥ ॥

ननु कथमत्र दुर्घटत्वं व्यभिचारत्वेन घटावगाहिन्यां व्यभिचारत्वावच्छिन्नप्रतीतौ मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य सुघटत्वात् इति चेन्न । तथासत्यसंभवः बाधत्वाश्रयाऽविषयकस्य बाधत्वेन घटावगाहिज्ञानस्य संभवेन तदघटितत्वस्य बाधादावसत्त्वादतः स्वाश्रयाऽविषयकप्रतीतिविषयवृत्तिस्वाश्रयाविषयकप्रतीतिविषयतावच्छेदकं यत्तादृशं रूपं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वमेव वक्तव्यं तथाच बाधत्वस्य बाधत्वेन घटविषयकप्रतीतिविषयतावच्छेदकत्वेपि न तादृशप्रती-



तिविषयवृत्तित्वमिति नासंभवः, प्रकृते मेयत्वविशिष्टव्यभिचारत्वाश्रयाऽविषयकप्रतीतिविषयतावच्छेदकं तादृशप्रतीतिविषयवृत्तिव्यभिचारत्वं न संभवतीति दुर्घटत्वं, वस्तुतस्तु व्यभिचारत्वं साध्याभाववद्वृत्तित्वविशिष्टहेतुतावच्छेदकं तत्र वैशिष्ट्यं सामानाधिकरण्यमेवेति सामानाधिकरण्यघटकतया व्यभिचारपदार्थस्यापि व्यभिचारत्वघटकतया दुर्घटत्वाभिधानमिति ध्येयम् ॥ श्रीः ॥

अतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेश इति ॥

नन्वत्र चरमोपात्तस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमित्यस्य प्रयोजनं प्रथममभिधाय तदनन्तरं प्रथमोपात्तस्य स्वावच्छिन्नेत्यस्य प्रयोजनाभिधाने किं बीजमिति चेन्न । स्वावच्छि-

न्नाविषयकेत्यस्योपादानेऽनुपादाने च स्वयमेव यदि तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वेन न निवेश्यते तदा व्यभिचारकालीनघटादावतिव्याप्तिः तादृशघटत्वावच्छिन्नाऽविषयकज्ञानीयायां तदाश्रयाऽविषयकज्ञानीयायां वा विषयतायामवच्छेदकं यद्व्यभिचारत्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयत्वात्तादृशघटत्वाश्रयस्य, स्वपदार्थैं तादृशप्रतीतिविषयतावच्छेदकत्वनिवेशेतु तादृशघटत्वस्य स्वपदार्थस्य व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावेन नातिव्याप्तिः स्वपदार्थैं तादृशप्रतीतिविषयतावच्छेदकत्वानुपादाने स्वावच्छिन्नेत्यस्य व्यावृत्तिर्न संभवति तदनुपादाने मेयत्वविशिष्टव्यभिचारत्वाश्रयव्यभिचाराविषयकप्रतीतिविषयतावच्छेदकं यद्बाधत्वादिकं तदवच्छिन्नाऽविषयकप्र-

तीतिविषयता मेयत्वविशिष्टव्यभिचारे यथा वर्तते तथा तादृशव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिवि षयतावच्छेदकशुद्धव्यभिचारत्वावच्छिन्नाविषयके प्रमेयत्वादिना तद्विषयकज्ञाने मेयत्वविशिष्टव्यभि- चारस्य विषयत्वात्, तन्निवेशेतु स्वावच्छिन्नेत्यस्याऽनिवेश एवायं दोषो नतु तन्निवेश इति सूचना- य वैपरीत्येन प्रयोजनाभिधानादिति ॥ श्रीः ॥

स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वस्य तादृशधर्मविशेषणत्वे व्यभिचारत्वादेरपि प्रमेयत्वादिना व्यभिचारत्वाद्यवच्छिन्नावि- षयकप्रतीतिविषये व्यभिचारादौ वर्तमानतयाऽसंभव इति ॥ ॥

ननु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वापेक्षया तादृशप्रतीतिविषयताश्रयवृत्तित्वस्य गुरुतया कथमियं शङ्कापीति चेन्न। वह्न्यभाववद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं ह्रदत्वमपि प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं विशिष्टस्य शुद्धानतिरिक्तत्वात् तथाच तदघटितत्वस्य बाधादावसत्त्वादसंभवोऽतः स्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तदवच्छिन्नानुयो-



गिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाविषयिताशून्यत्वस्य निवेशनीयतया तादृशप्रतीतिविषयवृत्तिवृत्तित्वस्य निवेशसंभवेन लाघवानपायादिति ॥ श्रीः ॥

प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकं यद्गगनाभाववत्प्रमेयत्वादि तदाश्रयाविषयकप्रतीत्यप्रसिद्ध्या व्यभिचारादौ तादृशप्रतीतिविषयत्वस्य दुरुपपादतयाऽव्याप्तिरिति ॥ ॥ ॥

नन्वु ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्ध्रदवृत्ति-वह्न्यभाववत्वं तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधतावच्छेदकेऽभावेनासंभव एव कुतो नाभिहितः । नच तदाश्रयमुख्यविशेष्यताशून्यत्वविवक्षणान्नासंभव इति वाच्यम् । तथापि बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसत्प्रतिपक्षतावच्छेदकधर्माश्रयपक्षाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वादावभावेनासंभवस्य दुर्वारत्वादिति चेन्न । घटो गगनवानित्यादौ सत्प्रतिपक्षासिद्धिस्थले लक्षणसमन्वयसंभवादिति ॥ श्रीः ॥

अत्रच तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छेदकधर्मे विशेषणतापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टान्तराविषयकत्वनिवेश एवोचित इति ॥ ॥ ॥

नन्वत्र ज्ञानपदार्थे तादृशविशिष्टान्तराविषयकत्वनिवेशे लाघवं न संभवति अनुगमे गौरवात् तथा सति तत्रैवमनुगमः कार्यः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम्, प्रतिबन्धकतावैशिष्टयंच स्ववृत्तिर्यः किंचिद्रूपावच्छिन्नविषयतात्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्तिकिंचिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभे-

दप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयतात्वावच्छिन्नप्रतियोगिताकाभाववत्किंचिद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदक[6]तानिरूपितावच्छेदक[7]तानिरूपितावच्छेदक[8]तानिरूपितावच्छेदक[9]तावत्त्वसंबन्धेन तादृशा-

१ प्रतियोगित्वे । २ भेदे । ३ वृत्तित्वे । ४ निश्चये । ५ विषयित्वे । ६ प्रतियोगित्वे । ७ भेदे । ८ वृत्तित्वे । ९ निश्चये ।



वच्छेदकतावत्त्वं च स्वनिरूपितावच्छेदक[1]तानिरूपितावछिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्व–स्वनिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छेदक[6]तानिरूपितावच्छेदक[7]तानिरूपितावच्छेदक[8]तानिरूपितावच्छेदक[9]तानिरूपितावच्छेदक[10]तानिरूपितावच्छेदक[11]तानिरूपितावच्छेदक[12]तानिरूपितावच्छेदक[13]तानिरूपितावच्छेदकतावत्त्वोभयसंबन्धेन अत्र प्रतिबन्धकतावृत्त्यभावोऽतिगुरुशरीरकः तन्मते अनुगमस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्ध-

१ विषयित्वे । २ अभावे । ३ प्रतियोगित्वे । ४ अवच्छिन्नत्वे । ५ अवच्छिन्नत्वे । ६ धर्मे । ७ अवच्छेदकत्वे । ८ विषयित्वे । ९ प्रतीतौ । १० अभावे । ११ प्रतियोगित्वे । १२ अवच्छिन्नत्वे । १३ अवच्छिन्नत्वे ।

सा० नि० ॥ १६२ ॥

कतावृत्तिर्यः किंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीति- विवेचना.
सिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानि-
रूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्रूपविशिष्टरू-
पवत्त्वं लक्षणम्, रूपे रूपवैशिष्ट्यं च स्वतादात्म्यप्रकृतानुमितिप्रतिबन्धकतानिष्ठाकिंचिद्रूपावच्छिन्नविष-
यिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदक[6]ताव- ॥ १६२ ॥

१ प्रतियोगित्वे । २ भेदे । ३ वृत्तित्वे । ४ निश्चये । ५ विषयित्वे । ६ प्रतियोगित्वे ।

च्छेदक[1]तावच्छेदक[2]तावच्छेदक[3]तावच्छेदक[4]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकताविशिष्टस्वा-
वच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्ववद्धर्मावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वोभयसंबन्धे-
नेति प्रतिबन्धकतावृत्त्यभावो लघुशरीरक इति चेन्न । एतन्मतेपि प्रकृतानुमितित्वव्यापकप्रतिबध्यता-
निरूपितप्रतिबन्धकतावृत्तिर्यः किंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं
नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदक[5]ता।निरूपितावच्छेदक[6]तानिरू-
पितावच्छेदक[7]ता।निरूपितावच्छेदक[8]ताविशिष्टधर्मवत्त्वं लक्षणम्, अवच्छेदकतावैशिष्ट्यं च स्वनिरू-

१ भेदे । २ वृत्तित्वे । ३ निश्चये । ४ विषयित्वे । ५ प्रतियोगित्वे । ६ भेदे । ७ वृत्तित्वे । ८ निश्चये ।

पितावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्व-स्वसमानाधिकरणो यः किंचिद्रूपा-
वच्छिन्नविषयत्वाभाववत्प्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्तिकिंचिद्रूपावच्छिन्नविष-
यिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदक[1]ता-
वच्छेदक[2]तावच्छेदक[3]तावच्छेदक[4]तावच्छेदक[5]तानिरूपितावच्छिन्नत्वसंबन्धाऽवच्छिन्नावच्छेदकतावद्धर्माऽव-
च्छिन्नविषयता नास्तीति प्रतीतिसिद्धोभावस्तन्निरूपितविषयतात्वावच्छिन्नप्रतियोगितानिरूपिता-
वच्छिन्नत्वानिष्ठावच्छेदकतानिरूपितावच्छेदक[6]तानिरूपितावच्छेदक[7]तानिरूपितावच्छेदक[8]तानिरूपिताव-

६ धर्मे । ७ अवच्छेदकत्वे । ८ विषयित्वे ।

च्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकताव-
त्त्वोभयसंबन्धेनेति लाघवमस्त्येव, अथ विशिष्टान्तरतावच्छेदकधर्मे स्वावच्छिन्नाविषयकप्रतीतिविषयता-
वच्छेदकत्वं किमिति निवेशनीयम् किंतु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायाम्
स्वावच्छिन्नाविषयकयद्रूपावच्छिन्नविषयताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रती-
तिसिद्धोऽभावस्तद्रूपावच्छिन्नविषयताशून्यत्वं दोषज्ञाने निवेश्यताम् तथा सति अनुगमशरीरम् लघु
तथाहि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम् रूपे प्रति-

१ प्रतीतौ । २ अभावे । ३ विषयित्वे ।

बन्धकतावैशिष्ट्यं च स्ववृत्तिकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं ना-स्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकता-निरूपितावच्छेदकतावत्संबन्धेन, तादृशावच्छेदकतावत्त्वं च स्वनिरूपितावच्छेदकतानिरूपितावच्छिन्न-त्वसंबन्धावच्छिन्नावच्छेदकतावत्त्व-स्वसमानाधिकरणो यः प्रकृतानुमितिप्रतिबन्धकतानिष्ठकिंचिद्रूपा-वच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानि-रूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितकिंचिद्रूपावच्छिन्नवि-

५ प्रतियोगित्वे । ६ भेदे ।

षयत्वाऽभावसमानाधिकरणनिश्चयनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धाव-
च्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयित्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्रतियोगितानिरू-
पितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकत्वनिष्ठावच्छेदक-
तानिरूपितविषयित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकत्वनिष्ठाऽवच्छेदक-
तानिरूपितसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितविषयतानिष्ठप्रति-

१ विषयित्वे ।

योगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावाच्छिन्नावच्छेदकतावत्त्वोभयसंबन्धेनेति। मैवम्। यादृशस्थलेऽप्रामाण्यज्ञानानास्कन्दितव्यभिचारज्ञानं नियमतो मेयत्वविषयकं मेयत्वाविषयकव्यभिचारज्ञानमप्रामाण्यज्ञानास्कन्दितं तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकज्ञानीयव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकत्वस्यानुमितिप्रतिबन्धकतायामसत्त्वात् तादृशव्यभिचारज्ञानस्य नियमेनाप्रामाण्यज्ञानवत्त्वेन प्रतिबन्धकताशून्यत्वात्, स्वमतेतु नायं दोषः व्यभिचारत्वेऽप्रामाण्यज्ञानास्कन्दितज्ञानान्तर्भावेण मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य सत्त्वात् मेयत्वविशिष्टव्यभिचारज्ञानान्तर्भावेण प्रतिबन्धकताया व्यभिचारविषयिताव्यापकत्वात् तद्विषयताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकज्ञानेऽसत्त्वादिति दिक्[1] ॥ श्रीः ॥



स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत्प्रकृतानुमितिप्र-

---

१ यद्यपि मेयत्वविशिष्टव्यभिचारज्ञाने प्रतिबन्धकतासत्त्वेपि व्यभिचारविषयित्वाऽव्यापकविषयिताशून्यत्वाभावेन विशेष्यदलाभावान्न तत्संग्रहस्तथाप्यप्रामाण्यज्ञानास्कन्दितज्ञानान्तर्भावेण विषयितायां विशिष्टविषयित्वाऽव्यापकत्वविवक्षणान्न दोषः।

तिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं तदवच्छिन्ना-
ऽविषयकत्वं दोषज्ञाने निवेशितम् ॥ ॥ ॥



अथात्र विशिष्टान्तरविषयितायां स्वरूपसंबन्धरूपमवच्छेदकत्वमेव निवेश्यताम् किमनतिरिक्तवृत्तित्वनिवेशेन। नचैवमसंभवः वह्न्यभाववद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकह्रदत्वावच्छिन्नविषयताया बाधज्ञानीयाया अनुमितिप्रतिबन्धकतावच्छेदकतया तादृशविषयताशून्यत्वस्य बाधज्ञानेऽसत्त्वादिति वाच्यम्। अनतिरिक्तवृत्तित्वकल्पेपि जातित्वादिना वह्नित्वाद्यवगाहिव्यभिचारज्ञाने प्रतिबन्धकताविरहेणाऽव्यापकविषयिताशून्यज्ञानीयत्वस्य विशिष्टान्तरविषयितायां निवेशनीयतया यद्रूपाव-

च्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिता तादृशप्रतिबन्धकतानिरूपितस्वरू-
पसंबन्धरूपावच्छेदकतावती स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नविषयताशून्यत्व-
स्य विवक्षणेनासंभवाभावादिति चेन्न। संयोगवज्जलं जलाभाववदित्यत्र जलवत्संयोगवज्जलरूपबाधेऽ-
व्याप्तेः तत्र जलत्वेन घटावगाहिजलवत्संयोगवज्जलमिति ज्ञानीयायाः संयोगवज्जलत्वावच्छिन्नविषयतायाः
प्रतिबन्धकतावच्छेदकतया तादृशज्ञानेच संयोगवज्जलत्वावच्छिन्नविषयिताऽव्यापकविषयितायाः क-
स्या अप्यभावात् तादृशबाधज्ञाने च संयोगवज्जलत्वावच्छिन्नविषयताशून्यत्वाभावात्, एवं संयोगः
संयोगाभाववान् संयोगाभाववत्पर्वतकालीनधूमादित्यत्र संयोगवत्पर्वतरूपसाधनाप्रसिद्धावव्याप्तिः सं-

योगत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यसंयोगः संयोगवानिति ज्ञानीयसंयोगत्वावच्छिन्नविषयितायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वात् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसंयोगत्वावच्छिन्नविषयताशून्यत्वस्य तादृशसाधनाप्रसिद्धित्वावच्छिन्नज्ञानेऽसत्त्वात् । नच यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयिता स्वावच्छिन्नविषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिता तादृशानुमितिप्रतिबन्धकतावच्छेदिका स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नविषयताशून्यत्वस्य विवक्षणान्नोक्तदोषः संयोगत्वावच्छिन्नविषयिताव्यापकीभूतायाः संयोगत्वावच्छिन्नविषयितानिरूपितसंयोगत्वावच्छिन्नविषयिताया अभावस्य संयोगः संयोगवानिति ज्ञानेऽसत्त्वात्, एवं संयोगवज्जलत्वावच्छिन्नविषयित्वाऽव्यापकीभूतायाः संयोगावच्छिन्नविषयितानिरूपितसंयोगवज्जलत्वावच्छिन्नविषयिताया अभावस्य जलत्वेन घटावगाहिनि जलवत्संयोगवज्जलमिति ज्ञानेऽसत्त्वाच्चेति वाच्यम् । तथापि रूपं गुणभिन्नम् इत्यत्र स्वरूपतो गुणत्ववद्रूपबाधेऽव्याप्तिः तस्यरूपघटितत्वात् रूपत्वावच्छिन्नविषयित्वाव्यापिकायास्तादृश विषयिताया रूपं गुण इति ज्ञानेऽसत्त्वात् तज्ज्ञानीयरूपत्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात्, एवं जलत्वावच्छेदेन जलवज्जलाभावसाधने जलवज्जलवज्जलरूपे बाधेऽव्याप्तिः तस्य जलवज्जलघटितत्वात् जलवज्जलत्वावच्छिन्नविषयित्वाव्यापकीभूता यद्रूपावच्छिन्नविषयितानि-

रूपितयद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यबाधज्ञानीय-जलवज्जलत्वावच्छिन्नविषयितायास्तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वात् । नच यद्रूपावच्छिन्न-विषयता स्वावच्छिन्नविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयताशून्यत्वस्यापि विवक्षणान्नोक्तदोषः रूप-त्वावच्छिन्नविषयित्वाव्यापिकाया रूपाऽवच्छिन्नविषयताया रूपं गुण इति प्रतिबन्धकज्ञाने सत्त्वात्, एवं जलवज्जलत्वावच्छिन्नविषायिताव्यापकीभूताया जलवज्जलत्वावच्छिन्नविषयितायाः जलवज्जलव-ज्जलमिति प्रतिबन्धकज्ञाने सत्त्वाच्चेति वाच्यम् । जलं संयोगवज्जलाभाववदित्यत्र संयोगवज्जलवज्ज-लरूपबाधेऽव्याप्तेः तस्य संयोगवज्जलवदात्मकविशिष्टान्तरघटितत्वात् उक्तबाधज्ञानीयसंयोगवज्जलव-

त्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् तादृशविशिष्टविषयिताऽव्यापिका यद्रूपावच्छि-
न्नविषयता तस्याः तादृशप्रतिबन्धकज्ञाने च अभावात् । नच यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपाव-
च्छिन्नविषयता स्वावच्छिन्नविषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषय-
ताशून्यत्वं विवक्षणीयं तथाच संयोगवज्जलवत्त्वावच्छिन्नविषयिताऽव्यापकीभूताया जलत्वावच्छिन्न-
विषयतानिरूपितसंयोगवज्जलत्वावच्छिन्नविषयताया उक्तप्रतिबन्धकज्ञाने सत्त्वेन तच्छून्यसंयोगवज्जल-

---

१ जलत्वेन धर्मितया वटावगाहिसंयोगवज्जलवज्जलमिति बाधभ्रमोयसंयोगवज्जलवत्त्वावच्छिन्नविषयतायाः प्रति-
बन्धकतावच्छेदकतया तज्ज्ञाने यद्रूपावच्छिन्नविषयताऽव्यापकविषयतायाः अभात् ।

सा०नि० वदिति ज्ञानीयतद्विषयितायाः प्रतिबन्धकतानवच्छेदकतया नाव्याप्तिरिति वाच्यम्। तथापि स्वरूपं विवेचना.
॥ १६९ ॥ स्वरूपवद्ध्रदत्ववदित्यत्र स्वरूपवद्ध्रदत्ववद्ध्रदवत्स्वरूपात्मकबाधेऽव्याप्तिः स्वरूपवद्ध्रदत्ववद्ध्रदवत्त्वाव-
च्छिन्नविषयित्वाव्यापकीभूता यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता तच्छून्यतादृशबा-
धज्ञानीयस्वरूपवद्ध्रदत्ववद्ध्रदवत्त्वावच्छिन्नविषयितायाः प्रतिबन्धकतावच्छेदकत्वात् तादृशबाधस्य च
तद्घटितत्वात्। नच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयितासामान्यमनु-
मितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽघटितत्वं विवक्षणीयं तदापि अनतिरिक्तवृत्तित्वपक्षनिवे- ॥ १६९ ॥
शनीयाऽप्रामाण्यज्ञानानास्कन्दितत्वसंशयान्यत्वाऽनिवेशेन लाघवात् तथाच न प्रागुक्तदोषावकाश इति

वाच्यम्। अभाववान् वह्न्यभाववान् अभाववान् ह्रद इति ज्ञानस्य ह्रदो वह्निमानित्यनुमितिप्रतिबन्ध-
कतया अभाववद्ध्रदत्वावच्छिन्नविषयितासामान्यस्य तादृशानुमितिप्रतिबन्धकतावच्छेदकतया वह्न्यभाव-
वद्ध्रदादिरूपबाधस्य तदघटितत्वाभावेनाऽव्याप्त्यापत्तेः। नच यद्रूपावच्छिन्नविषयितासामान्यं ज्ञानवै-
शिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽघटितत्वस्य विवक्षणान्नायं दोष इति वाच्यम्।
तथा सति मेयत्वविशिष्टासाधारण्येतिव्याप्त्यापत्तेः मेयत्वविशिष्टासाधारण्यघटकतावच्छेदकशुद्धाऽसा-
धारण्यत्वावच्छिन्नविषयितासामान्यस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकत्वात् शुद्धासा-
धारण्यस्य विशिष्टान्तरत्वासंभवात्। नच यद्रूपावच्छिन्नविषयतासामान्यं ज्ञानवैशिष्ट्याऽच्छिन्नत्वाऽ-

साधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्प्रतिबन्धकतावच्छेदकं तदवच्छिन्नाघटितत्वं विवक्षणीयं तथा चासाधारण्यप्रतिबन्धकतायामसाधारण्यविषयकत्वाऽनवच्छिन्नत्वाभावेनोभयाभावसत्त्वेनासाधारण्यस्य विशिष्टान्तरतासंभवेन मेयत्वविशिष्टासाधारण्ये नातिव्याप्तिः नवा बाधेऽव्याप्तिः, उक्तरीत्याऽभाववद्वद्विषयकनिश्चयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयस्यैव सत्त्वेन तस्य विशिष्टान्तरत्वाभावादिति वाच्यम् । तथापि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र मेयत्वविशिष्टबाधेऽतिव्याप्त्यापत्तेः गगनाभाववद्गगनाभाववदभाववत्कालीनघटात्मकबाधविषयितासामान्यस्य प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया-

मेवावच्छेदकतया तत्प्रतिबन्धकतायामुक्तोभयसत्त्वेनोभयाभाववत्प्रतिबन्धकतावच्छेदकत्वस्य दोषान्तरविषयितायामेव सत्त्वेन तदघटितत्वस्योक्तमेयत्वविशिष्टबाधेऽक्षतत्वात् । नच यद्रूपावच्छिन्नविषयितासामान्यं ज्ञानवैशिष्ट्यावच्छिन्नत्वा-ऽसाधारण्यविषयित्वानवच्छिन्नत्व-प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयित्वानवच्छिन्नत्वैतत्रितयाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाघटितत्वं विवक्षणीयम्, विषयितायां प्रतिबन्धकतावैशिष्ट्यंच स्वावच्छेदकत्वस्वनिरूपितप्रतिबध्यतावच्छेदकविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताऽवच्छेदकत्वोभयसंबन्धेन, तथाच तादृशबाधनिश्चयप्रतिबन्धकतायां प्रागुक्तोभयाभावप्रतियोग्युभयसत्त्वेपि प्रकृ-

तानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता सती तन्निरूपितप्रतिबध्यतावच्छेदकगगनाभाववदभाववत्कालीनघटत्वावच्छिन्नविशेष्यतानिरूपितगगनत्वावच्छिन्नप्रकारिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितगगनाभाववत्तादृशघटविषयकबुद्धित्वावच्छिन्नप्रतिबध्यतावच्छेदकीभूता या गगनाभाववत्तादृशघटविषयिता तदनवच्छिन्नत्वाभावेनोक्तत्रितयाभावसत्त्वेन तादृशप्रतिबन्धकतायां बाधविषयितासामान्यस्याऽवच्छेदकतया शुद्धतादृशबाधस्य विशिष्टान्तरतोपपत्त्या तद्घटितेनातिव्याप्तिरिति वाच्यम् । वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवत्तादृशह्रदात्मकसत्प्रतिपक्षज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तत्प्रतिबन्धकतायां ज्ञान-



वैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वानवच्छिन्नत्वतादृशप्रतिबन्धकताविशिष्टविषयित्वाऽनवच्छिन्नत्वानां त्रयाणामपि सत्त्वेन तत्त्रितयाभाववत्प्रतिबन्धकतावच्छेदकविषयितासामान्यकदोषान्तराऽघटिते मेयत्वविशिष्टतादृशसत्प्रतिपक्षेऽतिव्याप्तेः, यदि च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकपक्षविशेष्यतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नविधेयताशाल्यनुमितित्वाऽवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानवच्छिन्नत्व-प्रागुक्तत्रितयैतच्चतुष्टयाभाववत्प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयितासामान्यं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नाघटितत्वस्य निवेशनेन तादृशातिव्याप्तिर्वार्यते तदाऽनतिरिक्तवृत्तित्वनिवेशापेक्षया किमपि

लाघवं न पश्याम इति अनतिरिक्तवृतित्वरूपावच्छेदकत्वनिवेश एवोचित इति ॥ श्रीः ॥

नच यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराऽघटितत्वस्य विवक्षितत्वान्न दोष इति ॥

ह्रदो वह्न्यभाववान् ह्रदे वह्न्यभाव इति ज्ञानयोरेकरूपेण प्रतिबन्धकत्वमङ्गीकृत्येदं, प्रतिबध्यप्रतिबन्धकभावश्च वह्नित्वावच्छिन्नपकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टस्वरूपत्वावच्छिन्नत्वाभावह्रदत्वावच्छिन्नप्रकारतानिरूपि

तत्वविशिष्टाधेयतात्वावच्छिन्नत्वाभावोभयाभाववद्ध्रदवह्न्यभावत्वावच्छिन्नविषयतानिरूपितसंसर्गविषयतानि-
रूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकत्वमिति, यद्वा स्वरूपत्वावच्छिन्नावच्छेदकत्वे-
तरसंसर्गानिष्ठावच्छेदकत्वानिरूपकवह्न्यभावत्वावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपिताधे-
यतात्वावच्छिन्नावच्छेदकत्वेतरसांसार्गिकावच्छेदकत्वानिरूपकह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनेति
एवंच वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदकविषयिता-
निरूपकतावच्छेदकं तदवच्छिनाविषयकप्रतीतिविषयतावच्छेदकं ह्रदवृत्तिवह्न्यभावत्वं तदवच्छिन्नाविष-
यकप्रतीतिविषयतावच्छेदकं वह्न्यभाववद्ध्रदत्वमिति लक्षणसंगतिः, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नवि-

षयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं तादृशरूपं शुद्धव्यभिचारत्वं तदवच्छिन्नाघटितत्वाभावान्मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः व्यभिचारघटितबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकं न शुद्धव्यभिचारत्वं तादृशप्रतिबन्धकतासामान्यान्तर्गतबाधप्रतिबन्धकताशून्यव्यभिचारमात्रनिश्चये सत्त्वात्, किंतु विपरीततादृशबाधत्वमिति न तत्राव्याप्तिरिति कथमसंभवाभिधानमिति कश्चित् । तन्न । तथा सति बाधविशिष्टव्यभिचारेऽतिव्याप्तिः बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं शुद्धव्यभिचारविषयकत्वं बाधविषयकत्वं वा न भवति, किंतु व्यभिचारविशिष्टबाधविषयकत्वमिति तदघटित-

त्वस्य तत्र सत्त्वादतः स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यस्वावच्छिन्नाविषयकप्रतीतिविषयता-
वच्छेदकत्वरूपमेव तादृशरूपे विशिष्टान्तरत्वं वक्तव्यं, तथाच विपरीतबाधत्वादिकं न विशिष्टान्तरता-
वच्छेदकमिति असंभवाभिधानस्य युक्तत्वात्। एतेनैकरूपेण प्रतिबन्धकत्वानङ्गीकारेपि सर्वं गगनव-
दित्यत्र गगनाभाववद्घटादिरूपबाधे लक्षणसमन्वयः तादृशबाधविषयकत्वावच्छिन्नप्रतिबन्धकतासा-
मान्यावच्छेदकं गगनाभाववत्पटत्वावच्छिन्नविषयितानिरूपकतावच्छेदकं तादृशपटत्वादिकं स्वावच्छिन्ना-
ऽविषयकप्रतीतिविषयतावच्छेदकंच तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वादित्यसंभवाभिधानमसङ्गतमिति
परास्तं, बाधविशिष्टव्यभिचारवारणायोक्तविवक्षाया आवश्यकतया गगनाभाववत्पटत्वादेर्विशिष्टान्त-

रतावच्छेदकत्वाऽसंभवात् । यत्तु यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकवि-
षयिताव्यापकप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकतात्वावच्छिन्न-
प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत्तद्रूपवृत्तिनिरूपकताकविषयिताशून्यज्ञानवृत्तिविषयितानि-
रूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकम् अधिकवारकपर्याप्तिमनिवे-
श्य तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकनिरूपकतावच्छेदकताकविषयिताशून्यज्ञानीयविषयितानिरूप-
कतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपविशिष्टवत्त्वं लक्षणम्, सर्वत्र दोषतावच्छेदक-
घटकसमुदायगतसमुदायत्वमादाय लक्षणं संगमनीयम्, तत्र विशिष्टान्तरं मेयत्वविशिष्टव्यभि-

चारादिकं तद्घटकसमुदायगतसमुदायत्वस्य व्यभिचारत्वघटकसमुदायगतसमुदायत्ववृत्तिनिरूपकताक-
शुद्धव्यभिचारविषयिताशून्यमेयत्वविशिष्टो व्यभिचार इति ज्ञानीयविषयितानिरूपकतावच्छेदकतात्वाव-
च्छिन्नपर्याप्त्यनुयोमितावच्छेदकत्वात्, यद्रूपपदेन मेयत्वविविष्टव्यभिचारत्वघटकसमुदायत्वोपादाने
विशिष्टान्तररूपं शुद्धव्यभिचारत्वघटकसमुदायत्वमपीति तदवच्छिन्नपर्याप्तिकनिरूपकतावच्छेदक-
ताकविषयिताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयकप्रतीतावभावान्नातिव्याप्तिः,तत्राधिकवारकप-
र्याप्त्यनिवेशादिति कथमसंभव इति। तदपि न। तथापि बाधविशिष्टव्यभिचारादिवारणाय विशि-
ष्टान्तरताघटकप्रतीतौ यद्रूपवृत्तिनिरूपकताकविषयित्वाऽव्यापकविषयिताशून्यत्वस्य निवेशनीयत-

या तादृशविशिष्टान्तराप्रसिद्ध्या असंभवस्य दुष्परिहरत्वात्, यदपि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं यद्रूपावच्छिन्नविषयकत्वमित्यस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकं यद्रूपावच्छिन्नविषयिताव्यापकत्वमित्यर्थः तथाच बाधविपरीतबाधयोरेकरूपेण प्रतिबन्धकत्वाभावेपि लक्षणसमन्वयः संभवति इति, तथाहि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतायां विशिष्टान्तरत्वेनाभिमतविशिष्टविषयिताव्यापकत्वं न स्वरूपसंबन्धेन किंतु स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वसंबन्धेन, एवंच ह्रदे वह्न्यभाव इति निश्चयस्य ह्रदो वह्न्यभाववानिति निश्चयस्य चैकरूपेण प्रतिबन्धकत्वाभावेप्येकधर्मावच्छिन्नं प्रत्येव प्रतिबन्धकतया ह्रदवृत्तिवह्न्यभाववत्त्वावच्छिन्नविषयकनिश्चये सर्वत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतायाः सत्त्वेन तादृशप्रतिबन्धकतात्वव्यापकत्वस्य ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयिताव्यापकत्वे सत्त्वेन तस्य विशिष्टान्तरतासंभवात् तदघटितत्वस्य बाधे सत्त्वात्, एवं सर्वं गगनवदित्यत्रापि गगनाभाववद्घटत्वाद्यवच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतात्वव्यापकत्वस्य गगनाभाववत्पटत्वाद्यवच्छिन्नविषयिताव्यापकत्वे सत्त्वेन तत्रापि लक्षणसंगतिः, एवं व्यभिचारघटितबाधेच नाव्याप्तिः तादृशबाधत्वावच्छिन्नप्रतिबन्धकताया उक्तसम्बन्धेन शुद्धव्यभिचारविषयकनिश्चयेऽभावेन तद्विषयिताव्यापकत्वे तादृशप्रतिबन्धकतात्वव्यापकत्वाभावेन शुद्धव्यभिचारस्य विशिष्टान्तरत्वाभावात् विपरीतव्यभिचारघ-

टितबाध एव तादृशविशिष्टान्तरमिति तदघटितत्वस्य तत्र सत्त्वादिति तदपि न, उक्तदोषानतिलङ्घनात्, तथाचासंभव एव, अत्र प्रथमं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽसंभवः वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता पक्षे साध्यवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितबाधनिश्चयप्रतिबन्धकता पक्षे हेतुवैशिष्ट्यावगाहिबुद्धिनिरूपिताऽवच्छेदकधर्मदर्शनप्रतिबन्धकता च तदुभयानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वरूपैकैकरूपवदप्रसिद्धेः, उत्तरत्रैव तन्निवेशे व्यभिचारघटितबाधस्थले तादृशबाधविषयिताव्यापिका विशिष्टबाधप्रतिबन्धकता शुद्धव्यभिचारप्रतिबन्धकता च तदुभयावच्छेदकत्वं स्वरूपसम्बन्धरूपं न बाधविषयितायाः शुद्धव्यभिचारनिश्चयप्रतिबन्धकतायामन-

वच्छेदकत्वात्, व्यभिचारविषयितायास्तदुभयावच्छेदकत्वेपि स्वरूपसम्बन्धरूपतन्निवेशे बाधादिज्ञानीयैकदेशविषयतामादायासंभववारणाय यद्विषयितासामान्यस्यैव तादृशावच्छेदकताया वक्तव्यतया जातित्वादिना वह्नित्वाद्यवगाहिव्यभिचारविषयितायास्तत्सामान्यान्तर्गतायास्तदवच्छेदकत्वाभावेनाप्रसिद्धिभिया यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयितासामान्यस्य विवक्षणीयतया व्यभिचारत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयव्यभिचारविषयिताया बाधप्रतिबन्धकतायामनवच्छेदकत्वात् तदप्रसिद्धिरिति, उभयत्र तन्निवेशेतु बाधादिविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकाविषयितानिरूपकतावच्छेदकतदविषयकप्रतीतिविषयतावच्छेदकरूपाऽप्रसि-

द्विरतोऽनतिरिक्तवृत्तित्वमेवोभयत्र निविष्टम् तथाच विपरीतबाधत्वादिकमेव तादृशंप्रसिध्यति ॥ श्रीः ॥



व्यभिचारत्वादिरूपस्वावच्छिन्नविषयताकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याऽप्रसिद्ध्याऽसंभवादिति ॥

नन्वत्र स्वावच्छिन्नविषयकत्वावच्छिन्ना यावत्यः प्रकृतानुमिति प्रतिबन्धकतास्तत्प्रत्येकं यद्रूपावच्छिन्नघटकानिरूपितविषयितात्वव्यापकं तद्रूपावच्छिन्नाऽघटितत्वं समुदितार्थः, प्रतिबन्धकताया विषयि- 

तात्वव्यापकत्वमवच्छेदकतासंबन्धेन, घटकत्वंच तदविषयकप्रतीतिविषयतावच्छेदकधर्म्मवत्त्वं तथाच वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता यावत्यः तत्प्रत्येकं केवलबाधप्रतिबन्धकतैव तदनतिरिक्तवृत्तिमेयत्वविशिष्टबाधादिविषयित्वमिति नाप्रसिद्धिः, एवंच तादृशबाधादिप्रतिबन्धकतायां मेयत्वविशिष्टबाधत्वादिरूपयद्रूपावच्छिन्नघटकशुद्धबाधादिविषयितात्वव्यापकत्वसत्त्वात् बाधे तदघटितत्वसत्त्वाल्लक्षणसमन्वयः मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताव्यापकव्याप्तिज्ञाननिरूपितप्रातिबन्धकतायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नघटकशुद्धव्यभिचारविषयितात्वव्यापकत्वस्य सत्त्वात्, यद्रूपपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्तुं शक्यतया स्वस्य स्वाघटितत्वाभावान्नातिव्या-

तिः, एवं व्यभिचारघटितबाधे नाव्याप्तिः तादृशबाधत्वावच्छिन्नविषयित्वावच्छिन्नयावत्प्रतिबन्धकतान्तर्गता बाधप्रतिबन्धकता व्यभिचारप्रतिबन्धकता च तत्प्रत्येकं तादृशबाधघटकव्यभिचारविषयिताव्यापकत्वं नास्ति तादृशबाधविषयिताव्यापकत्वस्य सत्त्वेऽपि न तस्य तादृशबाधघटकत्वं[1] निरुक्तं, किंतु मेयत्वविशिष्टतादृशबाधघटकतद्विषयिताव्यापकत्वमेवेति तस्य तदघटितत्वात्, एवं बाधविशिष्टव्यभिचारादौ नातिव्याप्तिः तादृशव्यभिचारविषयिताव्यापकयावत्प्रतिबन्धकतान्तर्गता बाधप्रतिबन्धकता व्यभिचारप्र-

१ स्वघटकत्वं स्वावच्छिन्नाविषयकप्रतीतिविषयत्वविशिष्टस्वावच्छिन्नविषयताऽव्यापकविषयताशून्यज्ञानीयविषयितानिरूपकत्वम् ।

तिबन्धकता च तत्प्रत्येकं बाधविशिष्टव्यभिचारघटकशुद्धबाधशुद्धव्यभिचारविषयितात्वव्यापकत्वसत्त्वा-
त्, एवंच सति विशिष्टद्वयाऽघटितत्वमपि न निवेशनीयं वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्न-
विषयिताव्यापिका प्रकृतानुमितिप्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नैव तत्रच स्वावच्छिन्नाऽविषयकप्रती-
तिविषयतावच्छेदकत्वरूपोक्तविशिष्टघटकतावद्वह्न्यभाववज्जलवज्जलवद्ध्रदविषयितात्वव्यापकत्वस्य स-
त्त्वेन स्वस्य स्वाघटितत्वाभावेन तादृशविशिष्टेऽतिव्याप्तिविरहात्, एवं स्वरूपसंम्बन्धरूपावच्छेदकता-
संम्बन्धेन प्रतिबन्धकताया व्यापकत्वविवक्षणात् रूपं नीलरूपवदित्यादौ नीलरूपाभाववन्नीलादौच
नातिव्याप्तिः तत्र नीलरूपाभाववन्नीलत्वविशिष्टविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकता नीलरू-

पाभाववन्नीलत्वविशिष्टविषयकनिश्चयवैशिष्ट्यावच्छिन्ननीलत्ववद्रूपत्वावच्छिन्नविषयकनिश्चयप्रतिबन्धकतैव तत्र नीलरूपाभाववन्नीलत्वविशिष्टघटकनीलत्ववद्रूपत्वविशिष्टविषयितात्वव्यापकत्वस्य सत्त्वात्स्वस्य स्वाऽघटितत्वाभावात्, अत्रायमनुगमः पदार्थविशिष्टपदार्थवत्त्वं हेत्वाभाससामान्यलक्षणम्, पदार्थवैशिष्ट्यंच स्वतादात्म्य-स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतात्वव्यापकरूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसंबन्धेन, रूपे प्रतिबन्धकतात्वव्यापकत्वं च स्वविशिष्टरूपवत्त्वसंबन्धेन, रूपे स्ववैशिष्ट्यंच स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व-स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसंबन्धेन, तादृशरूपवत्त्वंच स्वावच्छिन्नविषयितात्वव्यापकत्वसंबन्धेनेति । नचैवं गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिः गगनाभाववत्तादृशघटत्वात्मकबाधतावच्छेदकरूपे स्वतादात्म्यसत्त्वेपि द्वितीयसंबन्धस्याभावात् तथाहि तादृशबाधविषयिताऽव्यापकप्रकृतानुमितिप्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतैव तत्रच तादृशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतदवच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकाऽभाववत्तादृशघटत्वावच्छिन्नविषयितात्वव्यापकत्वस्य सत्त्वात् स्वस्यच स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्, एवं प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य लक्ष्यत्वे तत्राव्याप्तिः तत्र

तादृशसत्प्रतिपक्षनिश्चयप्रतिबन्धकतायां तादृशसत्प्रतिपक्षघटकप्रतिहेतुव्यापकसाध्याभावविषयितात्व-व्यापकत्वस्य सत्त्वादिति वाच्यम्। स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतात्वव्यापकरूपावच्छिन्ना-ऽविषयकप्रतीतिविषयतानवच्छेदकत्व-स्वावच्छिन्नविषयकत्वावच्छिन्नतादृशप्रतिबन्धकताविशिष्टविषयि-तानिरूपकतानवच्छेदकत्व-स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदका-वच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताऽवच्छेदकधर्मावच्छिन्नविधेयताशाल्यनुमिति-त्वावच्छिन्नकार्यतानिरूपितकारणताविशिष्टविषयितानिरूपकतानवच्छेदकत्वै-तन्त्रितयाभाव-स्वतादा-त्म्योभयसंबन्धेन पदार्थवैशिष्ट्यस्य विवक्षणीयत्वात्, विषयितायं प्रतिबन्धकतावैशिष्ट्यंच स्वविशिष्टवि-

षयितावदन्यत्व—स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छे-
दकत्वोभयसंबन्धेन, अत्र प्रथमसंबन्धघटकविषयितायां स्ववैशिष्टयंच स्वनिरूपितप्रतिबध्यताविविष्ट-
निश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वसंबन्धेन,तत्संबन्धघटकविषयितावत्त्वंच स्व-
व्याप्यत्व—स्वाव्यापकत्वोभयसंबन्धेन विषयितायां कारणतावैशिष्टयंच स्वावच्छेदकत्व—स्वविशिष्टवि-
षयितावदन्यत्वोभयसंबन्धेन विषयितायां स्ववैशिष्टयंच अवच्छेदकत्वसंबन्धेन विषयितावत्त्वंच स्वव्या-
प्यत्व—स्वाव्यापकत्वोभयसंबन्धेन, अत्र विषयितायां प्रतिबन्धकतावैशिष्टयघटकतया स्वविशिष्टविष-
यितावदन्यत्वनिवेशात् ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ह्रन्यभाववद्ध्रदे नातिव्याप्तिः, अन्यथा ताद्द-

शहृदत्वे स्वतादात्म्यस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनि-
निश्चयत्वव्यापकहृदो वह्निमानिति निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयता-
निरूपकतावच्छेदकत्वप्रयुक्तत्रितयाभावस्यच सत्त्वेनातिव्याप्तेः, तन्निवेशेच तादृशप्रतिबन्धकतावि-
शिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितान्याप्यत्वस्य तदव्यापकत्वस्यच सत्त्वेन तादृशविषयितावि-
शिष्टान्यत्वाभावात् नातिव्याप्तिः, एवं विषयितायां कारणतावैशिष्ट्यघटकतया तादृशसंबन्धनिवेशात्
तत्रैव वह्न्यभावव्याप्यवद्ध्रह्न्यभावव्याप्यवद्ध्रदे नातिव्याप्तिः । नचैवमसाधारण्येऽव्याप्तिः असाधार- ॥ १७१ ॥
ण्यविषयितान्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतायामसत्त्वात् असाधारण्यतावच्छेदकस्य स्वपदे-

न धर्तुमशक्यतया तादात्म्यघटितोभयसंबन्धेन कस्यापि पदार्थस्य तादृशदोषतावच्छेदकेऽभावादि-
ति वाच्यम् । द्वितीयसंबन्धघटकप्रतिबन्धकतायां पक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वासाधारण्यवि-
षयिताशालित्वोभयाभाववत्स्वावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वस्य विवक्षणात् तथाच ता-
दृशनिश्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकरूपं वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदत्वं तद्घटका-
साधारण्यत्वावच्छिन्नविषयितामात्रे तादृशप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वस्य स-
त्त्वात् तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य सत्त्वाल्लक्षणसमन्वयः । नचैवमपि अभावो
गगनत्ववानाधेयत्वादित्यादौ हेतुमत्पक्षघटितासाधारण्येऽव्याप्तिः तत्र तादृशासाधारण्यविषयित्वा-

वच्छिन्नप्रतिबन्धकतात्वव्यापकत्वस्य तादृशासाधारण्यतावच्छेदके सत्त्वात् तादृशधर्मघटकतदवच्छिन्न-
विषयिताऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकाधेयत्ववदभाववत्त्वावच्छिन्नविषयि-
तासामान्ये तादृशप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वात् स्वस्य स्वावच्छिन्नाघटितत्वाभावात् इति वा-
च्यम्। रूपनिष्ठप्रतिबन्धकतात्वव्यापकतावच्छेदकीभूतस्वविशिष्टरूपवत्त्वसबन्धघटकरूपवत्त्वघटकस्वा-
वच्छिन्नविषयितात्वव्यापकत्वरूपसंबन्धघटकविषयितायामसाधारण्यविषयिताभिन्नत्वासाधारण्याविषयक-
त्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभावस्य विशेषणत्वाङ्गीकारात् तथाच तादृशप्रतिबन्धकता-
त्वव्यापकं नासाधारण्यतावच्छेदकं तद्घटकतावच्छेदकाधेयत्ववदभावत्वावच्छिन्नविषयितायासुभयाभा-

वाऽभावात् , असाधारण्यतावच्छेदकंतु घटकतावच्छेदकं न भवत्यतो मेयत्वविशिष्टतादृशासाधा-
रण्यतावच्छेदकमेव तादृशमिति तदवच्छिन्नाऽघटितत्वस्य सत्त्वान्नाव्याप्तिरिति चेन्न । निरवच्छिन्नव-
ह्न्यभाववद्ध्रदस्य दोषत्वमतेऽसंभवः तादृशबाधनिश्चयप्रतिबन्धकतायां तादृशबाधघटकवह्न्यभावव-
द्ध्रदत्वावच्छिन्नविषयितात्वव्यापकत्वसत्त्वात् स्वस्य स्वाऽघटितत्वाभावात् , यदिच तद्दोषवारणाय तादृ-
शप्रतिबन्धकतायां स्वघटकविषयिताव्यापकत्वं विवक्षणीयं तन्मते तादृशबाधादिज्ञानस्य न निरव-
च्छिन्नविषयिताशालित्वेन प्रतिबन्धकत्वं किन्तु अव्याप्यवृत्तित्वज्ञानमन्तर्भाव्य विरोधिविषयकत्वेनैव
तथाच नासंभवः, इदानीमसाधारण्यविशेषसंग्रहार्थं विषयितायामसाधारण्यविषयिताभिन्नत्वघटितो-

भयाभावो न निवेशनीयः, किंतु मेयत्वविशिष्टासाधारण्यवारणाय पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वासाधारण्यविषयताशालित्वोभयाभाववत्स्वावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वसंबन्धेन तादृशरूपविशिष्टरूपवत्त्वं प्रतिबन्धकतायां निवेशनीयम् तथाच न कश्चिद्दोष इति चेदुच्यते, तदा विशिष्टद्वयाऽघटितत्वं निवेशनीयम् एवं रूपं नीलरूपवदित्यत्र नीलरूपाभाववन्नीलेऽतिव्याप्तिवारणाय तद्विषयिताभेदोपि विवक्षणीय इति भट्टाचार्योक्तैतेन-कल्पापेक्षया गौरवमिति दिक् ॥ श्रीः ॥



स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयिता-

निरूपकतावच्छेदकः कश्चित्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवंभूतं यत्स्वं मेयत्वविशिष्टव्यभिचारत्वादि तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य विवक्षणीयतया न दोष इति वाच्यमिति ॥

अत्र प्रतियोगिनि स्वत्वं निविष्टं तथाच स्वं मेयत्वविशिष्टबाधत्वादिकं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकः स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकः कश्चित् शुद्धबाधत्वादिः तदवच्छिन्नाऽघटितत्वस्य बाधादौ सत्त्वा-

ल्लक्षणसमन्वयः, मेयत्वाविशिष्टबाधादावसत्त्वान्नातिव्याप्तिः, एवंच स्वपदेनोक्तव्यभिचारघटितबाध-
त्वं न धर्तुं शक्यते तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गतताद्दशबाधप्रतिबन्धक-
ताशुद्धव्यभिचारप्रतिबन्धकतयोरवच्छेदकीभूता यद्धर्मावच्छिन्नविषयिता स्वावच्छिन्नाविषयकप्रतीतिवि-
षयतावच्छेदकस्य तस्याप्रसिद्धेः, किंतु मेयत्वाविशिष्टताद्दशबाधत्वमेव धर्तव्यमिति तत्र नाव्याप्तिः,
अत्र प्रथमं स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे वह्न्यभाववद्ध्रदादिरूपबाधाद्यसंग्रहः मेयत्वविशिष्टताद्द-
शबाधविषयितााया बाधविषयितात्वेन साध्यवत्ताबुद्धिनिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां
पक्षे हेतुवैशिष्ट्यावगाहिबुद्धिनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां चावच्छेदकत्वात् ताद्दशप्र-

तिबन्धकताद्वयानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकस्य तादृशस्याप्रसिद्धेः, उत्तरत्रैव तन्निवेशे व्यभिचारघटितबाधाऽसंग्रहः स्वपदेन व्यभिचारघटितबाधत्वस्य धर्तुं शक्यत्वात्तादृशबाधत्वावच्छिन्न-विषयिताव्यापकप्रतिबन्धकताद्वयेऽपि तज्ज्ञानीयव्यभिचारविषयिताया अवच्छेदकत्वात् व्यभिचारत्वस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वात् यद्रूपावच्छिन्नविषयितासामान्यं स्वावच्छिन्नविषयक-त्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकमिति विवक्षणेन व्यभिचारविषयितासामान्यान्तर्गतशुद्धव्यभि-चारज्ञानीयतद्विषयितायास्तादृशबाधप्रतिबन्धकतावच्छेदकत्वाभावेन तद्दोषवारणे बाधाद्यसंग्रहः मेयत्व-विशिष्टबाधत्वावच्छिन्नप्रतिबन्धकतायां जातिमान् वह्न्यभाववानिति ज्ञानीयतद्विषयितायास्सामान्यान्त-

र्गताया अवच्छेदकत्वाभावात्, अतः स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयितासामान्यमवच्छेदकमिति विवक्षणीयम् एवंच मेयत्वविशिष्टव्यभिचारघटितबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाप्रसिद्धिः, उभयत्र तन्निवेशे धूमव्यभिचारी वह्निर्धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः तत्र मेयत्वविशिष्टव्यभिचारविषयितासामान्यावच्छिन्ना प्रतिबन्धकताद्वयी एका व्याप्तिग्रहप्रतिबन्धकता अन्या साध्यवत्ताग्रहनिरूपिता मेयत्ववान् धूमाभाववान् मेयत्ववान् धूमव्यभिचारी वह्निरिति ज्ञानविशिष्टज्ञानत्वाव-



च्छिन्ना तयोः व्यभिचारविषयितासामान्यस्यावच्छेदकत्वाऽभावात् स्वपदेन मेयत्वविशिष्टव्यभिचारस्य धर्तुमशक्यतयाऽन्यस्यैव[1] तादृशतया तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात्, तथाच पूर्वत्रानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशावश्यकत्वे उत्तरत्रापि तदावश्यकतेति, अत्र स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितायां स्वपदग्राह्यधर्मावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वमपि विवक्षणीयम् अन्यथा सर्वं गगनवदित्यत्र गगनाभाववद्घटत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिगगनाभाववत्पटत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञा-

१ किंतु मेयत्वविशिष्टयद्धूमाभाववद्वृत्तित्वं तद्वद्वह्नित्वादिकमेव ।

नीयविषयितानिरूपकतावच्छेदकताद्दशघटत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकगगनाभाववत्प-
टत्वप्रसिद्ध्या तत्राव्याप्तेः, यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वमपि निवेशनीयम्
अन्यथा ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभाववद्ध्रदेऽतिव्याप्तेः। नन्वत्र यद्विशिष्टान्तरं तद्भिन्नत्वमेव

१ एवं निवेशे पर्वतो वह्न्यभाववान् धूमाभावादित्यत्र वह्निधूमवत्पर्वतस्वरूपासिद्धिबाधानात्मकेऽतिव्याप्तिः स्वपदेन ताद्दशविशिष्टरूपस्य धर्तुमशक्यतया मेयत्वविशिष्टताद्दशविशिष्टपर्वतत्वस्यैव धर्तव्यतया तदघटितत्वस्योक्तविशिष्टे सत्त्वात् तदनिवेशेतु ताद्दशपर्वतत्वं स्वपदग्राह्यं भवति धूमवत्पर्वतकालीनवह्निमत्पर्वतस्यैव विशिष्टान्तरस्य प्रसिद्धेः सर्वं गगन-
वत् इत्यादौ गगनाभाववद्घटादावव्याप्तिस्तु एतत्कल्पे व्यभिचारघटितबाध इव दुर्वारेति।

निवेश्यताम् किं तदघटितत्वनिवेशनेन। नच व्यभिचारादौ मेयत्वविशिष्टव्यभिचारादिभेदाभावादसं-
भव इति वाच्यम् । स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापकप्र-
तिबन्धकतासामान्यानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदक-
ताद्दृशविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदककं यत्स्वं तद्भिन्नप्र-
कृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदक-
धर्मविशिष्टवत्त्वस्य विवक्षणीयतयाऽदोषात्, एवंच मेयत्वविशिष्टव्यभिचारत्वघटकसमुदायगतसमुदायत्वं
स्वपदग्राह्यं तद्भिन्नंच शुद्धव्यभिचारत्वगतसमुदायत्वमिति लक्षणसमन्वयः, मेयत्वविशिष्टव्यभिचारादौच

नातिव्याप्तिः एवंच व्यभिचारघटितबाधेच नाव्याप्तिः धूमव्यभिचारिवह्निमत्त्वगतसमुदायत्वस्य शुद्धव्यभि-
चारत्वगतसमुदायत्वात्मकतादृशरूपान्तरकत्वेपि तद्भेदस्य व्यभिचारघटितबाधत्वगतसमुदायत्वे सत्त्वेन
भट्टाचार्योक्तरीत्या दोषाभावात् इति चेन्न। व्यभिचारविशिष्टबाधेऽतिव्याप्त्यापत्तेः तत्र हि व्यभिचारविशि-
ष्टबाधत्वगतसमुदायत्वं न स्वपदेन धर्तुं शक्यते तादृशबाधत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामा-
न्यावच्छेदकतद्विषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकतदवच्छिन्नाविषयक-
प्रतीतिविषयतावच्छेदकरूपाप्रसिद्धेः व्यभिचारवैशिष्ट्यगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकनिरू-
पकतावच्छेदकविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकतादृशविषयिताऽव्यापकविषयिताशून्य-

ज्ञानीयविषयितानिरूपकतावच्छेदकतापर्याप्त्यवच्छेदकतादृशविषयिताशून्यज्ञानविषयितानिरूपकताव-
च्छेदकतापर्याप्त्यनुयोगितावच्छेदकव्यभिचारत्वगतसमुदायत्वप्रसिद्धावपि तद्भेदस्य व्यभिचारविशिष्ट-
बाधत्वगतसमुदायत्वे सत्त्वात्, तदघटितत्वनिवेशे नायं दोषः अधिकवारकपर्याप्त्यनिवेशेन तादृशव्य-
भिचारवैशिष्ट्यगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकनिरूपकतावच्छेदकताकविषयिताशून्यत्वस्य
व्यभिचारविशिष्टबाधज्ञानेऽसत्त्वात्। एतेन ननु स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्या-
वच्छेदकस्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकस्वावच्छिन्नाऽ-
विषयकप्रतीतिविषयतावच्छेदकयत्किंचिद्रूपकं यत्स्वं तदवच्छिन्नविषयितावत्त्व-तदवच्छिन्नविषयित्वाऽ-

व्यापकविषयिताशून्यत्वोभयाभाववद्यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिप्रति-
बन्धकता तद्रूपवत्त्वं विवक्ष्यताम्, व्यभिचारादिदोषनिश्चये स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वाव-
च्छिन्नविषयित्वाभावादुभयाभावोस्तीति दोषे लक्षणसमन्वयः, मेयत्वविशिष्टव्यभिचारानिश्चये चोभय-
सत्त्वान्नातिव्याप्तिः, व्यभिचारघटितबाधेच नाव्याप्तिः तत्र धूमव्यभिचारिवह्निमत्त्वस्य स्वपदेन धर्तुं
शक्यत्वेपि तादृशबाधनिश्चये तदवच्छिनविषयित्वाऽव्यापकधूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्न-
विषयितायाः सत्त्वेनोभयाभावसत्त्वात्। नचैवं मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः मेयत्वविशिष्टव्यभि-
चार-घटोभयविषयकसमूहालम्बने तदवच्छिन्नविषयित्वाऽव्यापकघटत्वावच्छिन्नविषयितासत्त्वेनोभयाभा-

वसत्त्वादिति वाच्यम् । तदुभयाभाववत्स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानि-
रूपकतावच्छेदकत्वस्य लक्ष्यतावच्छेदके विवक्षणीयत्वात्, स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्य-
त्वं वा निश्चयविशेषणमित्यपि परास्तम् व्यभिचारविशिष्टबाधेऽतिव्याप्तेः तत्र विशिष्टबाधत्वस्य स्व-
पदेन धर्तुमशक्यत्वात्, व्यभिचारवैशिष्ट्यस्य स्वपदेन धर्तुं शक्यत्वेपि तदवच्छिन्नविषयित्वाऽव्यापक-
बाधविषयितायास्तत्र सत्त्वेनोभयाभावसत्त्वात्। यत्तु यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकानिरूपकतावच्छे-
दकताकविषयिताव्यापकप्रतिबन्धकतासामान्यानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतापर्याप्त्यनु-

योगितावच्छेदकं यत्तादृशं समुदायत्वं तद्वृत्तिविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वं लक्ष्यतावच्छेदके निवेशनीयमिति, तदपि न उक्तदोषात् ॥ श्रीः ॥



तथा सति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधत्वावच्छिन्नघटकतावच्छेदकधूमव्यभिचारिवह्निमत्त्वादेः स्वावच्छिन्नाऽविषयकप्रतीति विषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वकत्वादव्याप्तेर्दुर्वारत्वादिति ॥ ॥ ॥

नन्वत्र पक्षे हेतुमत्ताज्ञानाऽकालीनत्वा—ऽसाधारण्यविषयितावत्त्वोभयाभाववत्स्वावच्छिन्नविषयिताव्यापिका यावत्यः प्रतिबन्धकतास्तत्प्रत्येकप्रतिबन्धकतायां स्वघटकीभूतयत्किञ्चिद्रूपावच्छिन्नाऽसाधारण्यविषयिताभिन्नत्वा—ऽसाधारण्यविषयकत्वाऽवच्छिन्नप्रतिबन्धकताऽवच्छेदकत्वोभयाऽभाववद्विषयितात्वव्यापकस्वरूपसम्बन्धरूपावच्छेदकताकत्वमस्ति, एवं भूतं यत्स्वं तदवच्छिन्नविषयितावत्त्व—तदवच्छिन्नविषयिताऽव्यापकविषयिताशून्यत्वोभयाभाववती या प्रतीतिः स्वावच्छिन्नविषयित्वाव्यापकाविषयिताशून्यतदीयविषयितानिरूपकतावच्छेदकत्वं लक्ष्यतावच्छेदके निवेशनीयं तथाच मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः, स्वपदग्राह्यं मेयत्वविशिष्टव्यभिचारत्वं तद्घटकीभूतशुद्धव्यभिचारत्वावच्छि-

न्ना या निरुक्तोभयाभाववती विषयिता तत्त्वव्यापकावच्छेदकताकत्वस्य व्याप्तिज्ञानप्रतिबन्धकतायां सत्त्वात्, तदवच्छिन्नविषयितावत्त्वघटितोभयाभावस्य च मेयत्वविशिष्टव्यभिचारविषयकप्रतीतौ तद्विषयिताऽव्यापकविषयिताशून्यायामभावात् तदवच्छिन्नविषयित्वाभावादेवोभयाभाववती शुद्धव्यभिचारविषयकप्रतीतिरिति लक्षणसमन्वयः, एवं व्यभिचारविशिष्टबाधेच नातिव्याप्तिः ताद्दशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताव्यभिचारज्ञानप्रतिबन्धकता बाधनिश्चयप्रतिबन्धकता च तत्तत्प्रतिबन्धकताव्यक्तौ ताद्दशबाधत्वघटकीभूतव्यभिचारत्वबाधत्वरूपयत्किंचिद्रूपावच्छिन्नविषयितात्वव्यापकावच्छेदकताकत्वस्य सत्त्वात् स्वपदेन व्यभिचारविशिष्टबाधत्वस्य धर्तुं शक्यत्वात्, एवं व्यभिचा-

रघटितबाधे च नाव्याप्तिः तत्र धूमव्याभिचारिवह्निमत्त्वस्य स्वपदेन धर्तुं शक्यत्वेपि तदवच्छिन्नवि-षयित्वाऽव्यापकधूमाभाववद्धूमव्याभिचारिवह्निमत्त्वावच्छिन्नविषयितायाः सत्त्वेनाऽव्यापकविषयिताशून्य-त्वाभावप्रयुक्तोभयाभावस्य तादृशबाधनिश्चये सत्त्वात्, स्वावच्छिन्नविषयकानिश्चये पक्षधर्मिकहेतुम-त्ताज्ञानाऽकालीनत्वघटितोभयाभावनिवेशादसाधारण्यसंग्रहः स्वघटकीभूतयत्किञ्चिद्रूपावच्छिन्नविषयि-तायामसाधारण्यविषयिताभिन्नत्वघटितोभयाभावस्य निवेशादसाधारण्याविशेषसंग्रहः स्वावच्छिन्नाविषयि-तावत्त्वघटितोभयाभाववत्प्रतीतौ स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वनिवेशात् मेयत्वविशि-ष्टव्यभिचारोदासीनविषयकसमूहालम्बनमादाय न तत्रातिव्याप्तिः, अत्रापि सर्वं गगनवदित्यत्र गग-

नाभाववद्घटपटादिसंग्रहाय स्वघटकीभूतकिंचिद्रूपावच्छिन्नविषयितायां स्वावच्छिन्नविषयिताऽव्यापकवि-
षयिताशून्यज्ञानीयत्वं ह्रदो वह्निमानित्यादौ जातिमद्वह्न्यभाववद्ध्रदेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्न-
विषयिताऽव्यापकविषयिताशून्यज्ञानीयत्वं च निवेशनीयम्, एवं चेदानीं विशिष्टद्वयाऽघटितत्वं न नि-
वेशनीयं वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वघटकीभूतवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितायां तादृश-
विषयिताव्यापकज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतासत्त्वात्, एवं रूपं नीलरूपवदित्यादौ
नीलरूपाभाववन्नीले च नातिव्याप्तिः, अत्रायमनुगमः पदार्थविशिष्टपदार्थवदन्यप्रतीतिविशिष्टरूपवत्त्वं
लक्षणम्, पदार्थे पदार्थवैशिष्ट्यं च स्वतादात्म्यस्वावच्छिन्नविषयिताशालिपक्षधर्मिकहेतुमत्ताज्ञाना-



कालीनत्वा-ऽसाधारण्यविषयितावत्त्वोभयाभाववन्निश्चयत्वव्यापकप्रतिबन्धकतात्वव्यापकत्वोभयसम्बन्धे-
न, व्यापकत्वं च स्वविशिष्टरूपवत्त्वसम्बन्धेन, रूपे स्ववैशिष्ट्यं च स्वावच्छिन्नाऽविषयकप्रतीतिविष-
यतावच्छेदकत्व--स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभ-
यसम्बन्धेन, रूपवत्त्वं चाऽसाधारण्यविषयिताभिन्नत्वा-ऽसाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छे-
दकत्वोभयाभाववत्स्वविशिष्टविषयितात्वव्यापकावच्छेदकताकत्वसम्बन्धेन, विषयितायां स्ववैशिष्ट्यं च
स्वावच्छिन्नत्व-स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन, निरवच्छिन्नसा-
ध्याभाववत्पक्षस्य लक्ष्यत्वमते पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वघटितोभयाभाववत्स्वावच्छिन्नविषयि-

ताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन, प्रतीतिर्विशेषणतापन्नभेदप्रतियोगिनि धर्मवत्त्वं च स्वावच्छिन्नविषयितावत्त्व-स्वावच्छिन्नविषयिताऽव्यापकविषयिताशून्यत्वोभयसम्बन्धेन, रूपे प्रतीतिवैशिष्ट्यं च स्ववृत्तिविषयितानिरूपकतावच्छेदकत्व-स्ववृत्तिकिञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिता नास्तीति प्रतीतिसिद्धाऽभावप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपिताऽवच्छेदकतानिरूपितावच्छेदकतावनिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वोभयसम्बन्धेन, गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटस्य लक्ष्यत्वे तादृशप्रतीतिमदन्यत्व-प्रकृतानुमितिप्रतिबन्धकताविशिष्टविषयितानवच्छेदकत्व-विरोध्यनुमितिजनकताविशिष्टविषयिता-

नवच्छेदकत्वैतत्त्रितयाभाववत्त्वं लक्ष्यतावच्छेदके विवक्षणीयम्, विषयितायां प्रतिबन्धकतावैशिष्ट्यंच स्वावच्छेदकत्व--स्वविशिष्टविषयितावदन्यत्वोभयसम्बन्धेन, विषयितायां स्ववैशिष्ट्यंच स्वानतिरिक्त-वृत्तित्व--स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वो-भयसम्बन्धेन विषयितायां जनकतावैशिष्ट्यं च प्रागुक्तरीत्या ज्ञेयमिति दिक्॥ श्रीः॥

नच स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकी-भूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृश-

ताद्दशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्रूपावच्छिन्नत्वमेव समुदितलक्षणार्थ इति ॥ ॥

स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितात्वसामानाधिकरण्येन यद्यद्रूपावच्छिन्नाऽनिरूपितत्वं तत्तद्रूपावच्छिन्नाऽघटितत्वं समुदायार्थः, अत्रोभयत्र स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे पर्वतो वह्निमानित्यत्र पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिः पाषाणमयत्वविशिष्टपर्वतत्वावच्छिन्नविषयित्वावच्छिन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितायां घटत्वाद्यवच्छिन्ना-



ऽनिरूपितत्वसत्त्वात् तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात्, प्रथमत एव तन्निवेशे ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता या बाधनिश्चयप्रतिबन्धकता याच पक्षे हेतुमत्ताज्ञाननिरूपिता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तदुभयानतिरिक्तवृत्तिविषयित्वाप्रसिद्धिः, उत्तरत्रैव तन्निवेशे व्यभिचारघटितबाधाऽसंग्रहः ताद्दशबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गता बाधनिश्चयप्रतिबन्धकता व्यभिचारानिश्चयप्रतिबन्धकता च तदुभयावच्छेदकविषयित्वाऽप्रसिद्धेः, यद्यपि व्यभिचारघटितबाधज्ञानीयव्यभिचारविषयितायास्तदुभयावच्छेदकत्वमस्ति बाधप्रतिबन्धकतायामपि धर्मितावच्छेदकतया तद्विषयिताया अवच्छेदकत्वात् तथापि सर्वं गगनवदि-

त्यत्र गगनाभाववद्घटपटादिरूपबाधसंग्रहार्थं तादृशविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वस्य ह्रदो वह्निमानित्यत्र जातिमद्ध्रदत्वभाववद्ध्रदवारणाय यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वस्य च विवक्षणीयतया व्यभिचारत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यशुद्धव्यभिचारविषयकज्ञानीयव्यभिचारविषयितायास्तदुभयावच्छेदकत्वं न संभवतीत्यप्रसिद्धिः, तथाच स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतानिष्ठाऽभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयाऽवृत्तिधर्मवान् यो यत्किंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितप्र-

तियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपि-
तावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नाऽवच्छेदकतावद्धर्मावच्छिन्नस्वाव-
च्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिष्ठो यः किंचिद्रूपावच्छिन्ननिरूपकताकनिरू-
पितत्वं नास्तीति प्रतीतिसिद्धोऽभावस्तन्निरूपितनिरूपितत्वनिष्ठप्रतियोगितानिरूपितनिरूपकतानि-
ष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नाऽविषयकप्रतीतिविषयताव-
च्छेदकधर्मवत्त्वं लक्षणार्थः, अत्रायमनुगमः पदार्थविशिष्टपदार्थवत्त्वं लक्षणम्, पदार्थे पदार्थवैशिष्ट्यं
च स्वतादात्म्य-स्वविशिष्टविषयितानिष्ठकिंचिद्रूपावच्छिन्ननिरूपकतानिरूपितत्वं नास्तीति प्रतीतिसि-

द्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावछिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मोव-
च्छिन्नविषयिताशून्यज्ञानीयविषयतानिरूपकतावच्छेदकत्वोभयसंबन्धेन, विषयितायां स्ववैशिष्टयंच स्वा-
वच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्व–स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यपक्षध–
र्मिकहेतुमत्ताज्ञानाकालीनत्वासाधारण्यविषयितावत्त्वोभयाभाववत्स्वावच्छिन्नविषयकनिश्चयत्वव्यापकप्र–
तिबन्धकतावृत्त्यभावप्रातियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितानवच्छेदकैकत्ववदुभयाऽवृत्ति–
धर्मवद्यत्किंचिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्ययत्किंचिद्रूपावच्छिन्नविषयिताशालिनिश्चय–
निष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छेदकतानि-

रूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्व-
संबन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नत्वोभयसंबन्धेन, तद्व्यक्तित्ववानभावश्चाऽसाधारण्यविषयिताशा-
लित्वपक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वोभयाभाववर्त्किंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रति-
योगितावच्छेदकत्वं नास्तीति प्रतीतिंसिद्धो ग्रांह्यस्तेन मेयत्वविशिष्टाऽसाधारण्ये नातिव्याप्तिरिति ॥श्रीः॥

---

१ एतादृशाभावानुपादाने असाधारण्ये लक्षणसमन्वय एव न संभवति वह्निव्यापकीभूताभावप्रतियोगि-
जलत्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतानिष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितानवच्छेद–
कैकत्ववदुभयावृत्तिधर्मवानभावः वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रति-

नन्वत्रापि स्वावच्छिन्नविषयकत्वव्यापिका यावत्यः प्रकृतानुमितिप्रतिबन्धकतास्तत्प्रत्येकावच्छेदकतायां यादृशघटकयत्किंचिद्धर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तादृशविषयितायां यद्यद्रूपावच्छिन्नाऽनिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाऽघटितं यत्स्वावच्छिन्नं तद्रूपावच्छिन्नत्वं समुदितार्थः ह्रदो

---

योगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्ध एव तन्निरूपितप्रतियोगितानिरूपितपरम्परयाऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावान्धर्मस्तादृशह्रदत्वमेव तदवच्छिन्नत्वस्यासाधारण्यविषयतायामभावात् तथाच मेयत्वविशिष्टासाधारण्ये कथमतिव्याप्त्यभिधानम् अत्र विषयितायां स्ववैशिष्टयं स्वावच्छिन्नविषयिताभिन्नत्वघटितैतदुभयाभाववत्त्वैतदुभयाभाववत्त्वसम्बन्धेन यदि विवक्ष्यते तदासाधारण्ये लक्षणसमन्वयो भवत्येव मेयत्वविशिष्टेऽसाधारण्येऽतिव्याप्तिश्चेति ध्येयम् ।

वह्निमानित्यादौ वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वव्यापिका बोधप्रतिबन्धकता तदवच्छेदकतायां मे-
यत्वविशिष्टबाधघटकबाधत्वात्मकयत्किंचिद्धर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तद्रूपावच्छिन्नवि-
षयितायां मेयत्वविशिष्टबाधत्व–घटत्वाद्यवच्छिन्नानिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाऽघटितत्वं बाधेऽ-
स्तीति लक्षणसमन्वयः, एवं मेयत्वविशिष्टव्यभिचारादौ नातिव्याप्तिः तादृशव्यभिचारत्वावच्छिन्नविष-
यिताव्यापकव्याप्तिज्ञानप्रतिबन्धकतायां मेयत्वविशिष्टव्यभिचारघटकशुद्धव्यभिचारत्वावाच्छिन्नविषयि-
तात्वव्यापकत्वस्य सत्त्वेन तत्र च विषयितायां मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपितत्वस्य स-
त्त्वात् तदवच्छिन्नाऽघटितत्वस्य च स्वावच्छिन्नेऽभावात्, एवं बाधविशिष्टव्यभिचारे च नातिव्याप्तिः

तादृशव्यभिचारत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतयोः प्रत्येकमवच्छेदकतायां बाधविशिष्टव्यभिचा-
रघटकबाधत्वावच्छिन्नविषयितात्वव्यापकत्वस्य व्यभिचारत्वावच्छिन्नविषयितात्वव्यापकत्वस्य च सत्त्वा-
त् स्वस्यच स्वाऽघटितत्वाभावात्, अत्र स्वरूपसंबन्धरूपप्रतिबन्धकतावच्छेदकतायां यादृशविशिष्ट-
घटकविषयितात्वव्यापकत्वस्य विवक्षणात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयिताव्यापक-
ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतायां तादृशविशिष्टघटकजलवद्ध्रदादिविषयितात्वव्यापक-
त्वस्य सत्त्वात् तस्य च तदवच्छिन्नाऽघटितत्वाऽभावात् तादृशविशिष्टे नातिव्याप्तिः अतो विशिष्ट-
द्वयाघटितत्वं न निवेशनीयम्, एवं नीलरूपाभाववन्नीलादौ नातिव्याप्तिरतोत्र तत्तद्विषयिताभेदोपि न



निवेशनीयः, अत्रायमनुगमः पदार्थविशिष्टपदार्थवत्त्वं हेत्वाभाससामान्यलक्षणं, पदार्थे पदार्थवैशिष्ट्यं
च स्वतादात्म्य–स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतात्वव्यापकधर्मविशिष्टधर्मावच्छिन्नाऽविषय-
कप्रतीतिविषयितानिरूपकतावच्छेदकत्वोभयसंबन्धेन, धर्मे प्रतिबन्धकतात्वव्यापकत्वं च स्वविशिष्ट-
रूपवत्त्वसंबन्धेन, रूपे स्ववैशिष्ट्यं च स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकत्व–स्वावच्छि-
न्नविषयिताऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसंबन्धेन, रूपवत्त्वं च
स्वविशिष्टविषयितात्वव्यापकावच्छेदकताकत्वसंबन्धेन, विषयितायां स्ववैशिष्ट्यं च स्वावच्छिन्नत्व-
स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन, धर्मे धर्मवैशिष्ट्यं च स्वविशिष्ट-

रूपावच्छिन्नविषयितानिष्ठकिंचिद्रूपावच्छिन्ननिरूपकताकनिरूपितत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकत्वसंबन्धेन, रूपे स्ववैशिष्ट्यं च प्रागुक्तोभयघटकद्वितीयसंबन्धेन, अन्यत्सर्वं प्रागुक्तरीत्या बोध्यम्, यद्वा तादृशप्रतिबन्धकतावच्छेदकतायां यादृशयादृशधर्मावच्छिन्नविषयितात्वव्यापकत्वमस्ति तादृशतादृशयत्किंचिद्धर्मा-

१ अत्र मेयत्वविशिष्टबाधत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकत्वावच्छेदकवह्नित्वाद्यवच्छिन्नविषयितायां स्वावच्छिन्नानिरूपितत्वसत्त्वाद्दोषवारणाय प्रागुक्तद्वितीयसम्बन्धः स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकस्वावच्छिन्नविषयितासामान्यकत्वरूपस्तदुभयसम्बन्धेन धर्मवैशिष्ट्यं रूपे बोध्यम् ।

वच्छिन्नविषयितायां यद्यद्रूपावच्छिन्नानिरूपितत्वमस्ति तत्तद्रूपावच्छिन्नाऽघटितत्वं समुदितार्थः, तथा-
च पदार्थविशिष्टपदार्थवत्त्वं लक्षणम्, पदार्थवैशिष्ट्यं च स्वतादात्म्य-स्वावच्छिन्नविषयिताव्यापकप्र-
तिबन्धकतात्वव्यापकरूपावच्छिन्नाऽघटितत्वोभयसंबन्धेन, रूपे प्रतिबन्धकतात्वव्यापकत्वं च स्वविशि-
ष्टरूपवत्त्वसंबन्धेन, रूपे स्ववैशिष्ट्यं च स्वावच्छिन्नाऽनिरूपितविषयितावच्छेदकत्व[1]-स्वावच्छिन्नविषयि-

---

१ स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितावृत्तिर्यो योऽभावः तत्तदभावकूटवती य-
द्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नत्वमिति समुदितोर्थः, कूटत्वस्यापि तादृशविषयतावृत्त्यभावत्वावच्छिन्नानुयोगि-

त्वाऽव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वोभयसंबन्धेन, रूपवत्त्वं च स्वावच्छिन्नविषयितात्वव्यापकावच्छेदकताकत्वसंबन्धेनेति चेन्न। प्रागुक्तरीत्या वक्ष्यमाणेनैतेन–कल्पापेक्षया गौरवस्य दुष्परिहरत्वात् ॥ श्रीः ॥

---

ताकपर्याप्तिकप्रतियोगित्वेन निवेशः, अत्राधिकरणभेदनाभावभेदे लक्षणसमन्वयो न संभवति तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितायां यद्यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकत्वाभावः तत्तद्रूपाभिन्नं यद्रूपं तद्रूपविशिष्टत्वम् ।



एतेन स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं समुदितलक्षणार्थ इति ॥ ॥

अत्रोभयत्र स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशे कपिसंयोग्येतत्त्वादित्यादौ कपिसंयोगाभाववद्वृक्षेतिव्याप्तिः कपिसंयोगाभाववद्वृक्षत्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकसाध्यवत्ताबुद्धिप्रतिबन्धकतात्मकयत्किंचित्प्रतिबन्धकतानिरूपिततादृशावच्छेदकतावत्तदवाच्छिन्नविषयितात्व–

व्यापकत्वस्य तदवच्छिन्ननिरूप्यतायां सत्त्वात्, उत्तरत्राऽनतिरिक्तवृत्तित्वनिवेशे तादृशप्रतिबन्धकताशून्याऽव्याप्यवृत्तित्वज्ञानकालीनानाहार्य्यत्वादिविशिष्टकपिसंयोगाभाववद्वृक्षविषयकनिश्चये तदवच्छिन्नविषयितासत्त्वेनातिव्याप्तिवारणेऽपि वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतानतिरिक्तवृत्तिविषयिता तादृशजलवद्ध्रदविषयितैवेति तत्त्वव्यापकत्वस्य तादृशजलवद्ध्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वेन तत्रातिव्याप्तिवारणार्थं विशिष्टद्वयाऽघटितत्वमपि निवेशनीयं, प्रथम एवानतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशे तु कपिसंयोगाभाववद्वृक्षे नातिव्याप्तिः अव्याप्यवृत्तित्वभ्रमानास्कन्दितानाहार्य्यत्वादिविशिष्टनिश्चयीयतद्विषयिताव्यापकत्वस्य प्रतिबन्धकतायामसत्त्वात्, एवं

विशिष्टद्वयाघटितत्वमपि न निवेशनीयम् वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयिताव्यापिका ज्ञानवैशिष्ट्यावच्छिन्ना या यत्किञ्चित्प्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितात्वस्य वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितायामपि सत्त्वेन तत्र तादृशजलवद्ध्रदत्वावच्छिन्ननिरूप्यताविरहेणातिव्याप्तिविरहात्, एवं च पूर्वमनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वमुतरत्र स्वरूपसम्बन्धरूपमिति विवेकः, अत्र प्रथमं स्वावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यानाहार्य्याप्रामाण्यज्ञानाऽव्याप्यवृत्तित्वभ्रमानास्कन्दितनिश्चयीयत्वं निवेशनीयम् अन्यथा पूर्वोक्तदोषात्, एवं यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितायामपि स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानी-

यत्वं निवेशनीयम् अन्यथा सर्वं गगनवदित्यत्र गगनाभाववद्घटत्वावच्छिन्नविषयिताव्यापकयत्किञ्चि-
त्प्रतिबन्धकतावच्छेदकगगनाभाववत्पटत्वावच्छिन्नविषयितायां तादृशघटत्वावच्छिन्ननिरूप्यताविरहेणा-
व्याप्त्यापत्तेः । नचैवमपि स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेपि सामान्यपदस्यावश्यकतया ह्रदो व-
ह्निमानित्यत्र जातिमद्वह्न्यभाववद्ध्रदेतिव्याप्तिः तत्र जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्याप-
कयत्किञ्चित्प्रतिबन्धकता साध्यवत्ताबुद्धिप्रतिबन्धकतैव तदवच्छेदकत्वं च तदवच्छिन्नविषयित्वाव्याप-
कविषयिताशून्यज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्ये नास्ति तत्सामान्यान्तर्गतजातिमा-
न्वह्न्यभाववानिति ज्ञानीयविषयितायां तदभावात्, किन्तु तादृशविशिष्टविषयितायामेव तत्त्व-

व्यापकत्वस्य तादृशविशिष्टनिरूप्यतायां सत्त्वादिति वाच्यम् । द्वितीयविशिष्टविषयितायां यद्रू-
पावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वस्यापि विवक्षणात्, एवं च तादृशयत्किञ्चित्प्रति-
बन्धकतावच्छेदकत्वस्य जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयव-
ह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयजातिमान्वह्न्यभाववानिति ज्ञानव्या-
वृत्तवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्ये सत्त्वेन तत्रच जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्ननिरू-
प्यत्वाऽभावेन नातिव्याप्तिः तथाच स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्याऽनाहार्याऽप्रामा-
ण्यज्ञानाऽनास्कन्दिताऽव्याप्यवृत्तित्वभ्रमाऽनास्कन्दितनिश्चयीयस्वावच्छिन्नविषयिताव्यापकप्रकृतानुमि-

तित्वव्यापकप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत्स्वाव-
च्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयवि-
षयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं लक्षणं पर्य्यवसितम् । नचात्राऽसाधारण्येऽव्याप्तिरसा-
धारण्यविषयिताव्यापकप्रतिबन्धकताऽप्रसिद्धेरिति वाच्यम् । अनाहार्य्यत्वादिविशिष्टपक्षधर्म्मिकहेतुमत्ता-
ज्ञानाकालीनत्वा-ऽसाधारण्यविषयकत्वोभयाभाववत्स्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वस्य प्रतिबन्ध-
कतायां विवक्षणीयत्वात् । नचैवमपि अभावो गगनत्ववानाधेयत्वादित्यत्रासाधारण्येऽव्याप्तिः अना-
हार्य्यत्वादिविशिष्टनिरुक्तोभयाभाववत्ताद्दशाऽसाधारण्यविषयिताकनिश्चयत्वव्यापकयत्किंचित्प्रतिबन्धक-

तानिरूपितस्वरूपसंबन्धरूपाऽवच्छेदकतावति तादृशासाधारण्यविषयित्वाऽव्यापकविषायताशून्यस्वा-
ऽवच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयाऽधेयत्ववदभावत्वाऽवच्छिन्ननिरूपितहेतुमत्पक्षविषयत्वे
तादृशाऽसाधारण्यत्वावच्छिन्ननिरूप्यत्वाऽभावात् । नच तादृशयत्किंचित्प्रतिबन्धकतासाक्षान्निरूपिता-
वच्छेदकतावद्विषयितायामेव तन्निरूप्यत्वं विवक्षितं हेतुमत्पक्षविषयिता च न तादृशीति वक्तव्यम्
ह्रदो जलवद्ध्रदकालीनवह्निमान्पङ्कजादित्यत्र जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलेऽति-
व्याप्तिः जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयित्वव्यापकयत्किंचित्प्रतिब-
न्धकता जलवद्ध्रदविषयकनिश्चयविशिष्टतादृशजलत्वावच्छिन्नविषयकनिश्चयप्रतिबन्धकतैव तत्साक्षादव-

च्छेदिकाच तादृशजलत्वावच्छिन्नविषयितैव तत्रच तादृशजलत्वावच्छिन्ननिरूप्यत्वस्य सत्त्वादिति वाच्यम् । तादृशयत्किंचित्प्रतिबन्धकतावच्छेदकविषयितायामसाधारण्यविषयिताभिन्नत्वाऽसाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात्, असाधारण्यघटकहेतुमत्पक्षविषयिता च नोभयाभाववती, किन्तु विशिष्टाऽसाधारण्यविषयितैव तत्रच तादृशासाधारण्यत्वावच्छिन्ननिरूप्यत्वसत्त्वान्नाव्याप्तिः, ह्रदो जलवद्ध्रदकालीनवह्निमान्पङ्कजादित्यत्र निरुक्तजले नातिव्याप्तिः असाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभावप्रयुक्तनिरुक्तोभयाभाववत्यां तादृशजलत्वा-

१ जलवद्ध्रदत्वावच्छिन्नविषयितायामप्यसाधारण्यघटकविषयितात्वप्रयुक्तासाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धक-

वच्छिन्नविषयिताव्यापकयत्किंचित्प्रतिबन्धकतावच्छेदिकायां जलवद्ध्रदविषयितायां तादृशजलत्वावच्छिन्ननिरूप्यत्वाऽभावात्, एकरूपेण प्रतिबन्धकत्वे तु असाधारण्यरूपपङ्कजविषयितैव तादृशी, प्रथममवच्छिन्नान्तानुपादाने प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितयत्किंचित्प्रतिबन्धकतानिरूपितावच्छेदकतावद्वह्न्यभावत्वावच्छिन्नविषयितायां बाधनिरूप्यत्वाभावादसम्भवः, यद्रूपावच्छिन्नविषयितासामान्यं तादृशप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नविषयितायां निरूप्यत्वोक्तौ पर्वतो वह्निमानि-

तासत्त्वेपि जलवान् ह्रद इति स्वतन्त्रज्ञानीयायां तद्विषयितायामुभयाभावसत्त्वात् तत्रच तादृशयत्किंचित्प्रतिबन्धकतावच्छेदकत्वस्यापि सत्त्वात् तत्रच स्वावच्छिन्ननिरूप्यत्वाभावान्नातिव्याप्तिः ।

त्यत्र पाषाणमयत्वविशिष्टपर्वतेतिव्याप्तिः पाषाणमयत्वविशिष्टपर्वतविषयितासामान्यस्य तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नयत्किंचित्प्रतिबन्धकतायामवच्छेदकत्वात्, प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वाऽसाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभावविवक्षया तद्दोष-

१ प्रतिबन्धकतायामुभयाभावनिवेशे ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्वह्निव्यापकीभूताभावप्रतियोगिजलवद्वृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदेऽतिव्याप्तिस्तादृशविशिष्टविषयकनिश्चयनिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां तादृशावच्छेदकधर्मघटकासाधारण्यविषयिताया अप्यवच्छेदकत्वेनोक्तोभयाभावस्य सत्त्वात् असाधारण्यविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयासाधारण्यविषयित्वानवच्छिन्नत्वस्योक्तोभयाभावप्रतियोगितावच्छेदककोटौ निवेशनेन ता-

वारणेपि कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षेतिव्याप्तिः तादृशानुमितित्वव्यापकसाध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां कपिसंयोगाभाववद्वृक्षविषयितासामान्यस्यावच्छेदकत्वात्, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे च वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेतिव्याप्तिः, प्रकृतानुमितिनिरूपितयात्किंचित्प्रतिबन्धकता ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तदनतिरिक्तवृत्तिविषयिता च तादृशविशिष्टविषयकत्वाऽव्यापकविषयिताशून्यज्ञानीयतादृशवि-

दृशप्रतिबन्धकतावारणेपि जलं वह्निमत् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगित्ववद्वृत्तिवह्निव्यापकीभूताभावप्रतियोगित्ववज्जलेतिव्याप्तिरिति ।

शिष्टविषयितैव तद्धारणाय विशिष्टद्वया ऽघटिततत्वनिवेशे गौरवम्, अतो यथाश्रुतमेव साधु, अत्रायम-
नुगमः पदार्थविशिष्टपदार्थवत्त्वं हेत्वाभासत्वम्, पदार्थवैशिष्ट्यं च स्वतादात्म्य--स्वावच्छिन्ननिरूप्य-
तावृत्तिर्यः किंचिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्याऽनाहार्य्याऽप्रामाण्यज्ञानानास्कन्दिताऽ-
व्याप्यवृत्तित्वभ्रमानाऽस्कन्दितपक्षधर्म्मिकहेतुमत्ताज्ञानाकालीनत्वाऽसाधारण्यविषयित्वोभयाऽभाववर्त्तिक-
चिद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकयर्त्किचित्प्रतिवन्धकतावच्छेदकत्ववृत्तिर्किंचिद्रूपाऽवच्छि-
न्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीययत्किंचिद्रूपाऽवच्छिन्नविषयितानिष्ठभेदप्रतियोगिताऽवच्छेदक-
त्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपितावच्छेदकतानिरूपितावच्छेदकतानिरू-

पितावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपावच्छिन्नकिंचिद्रूपावच्छिन्नविषयि-
त्वाऽव्यापकविषयिताशून्यज्ञानवृत्त्यसाधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वाऽवच्छिन्नप्रतिबन्धक-
तावच्छेदकत्वोभयाभाववद्विषयितानिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धोभावस्तन्नि-
रूपितावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगितानिष्ठाऽवच्छेदकतानिरूपितभेदनिष्ठाऽवच्छेदक-
तानिरूपितवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपितविषयितानिष्ठाऽवच्छेदकतावत्त्वोभयसम्बन्धेन, तादृशाऽ-
वच्छेदकतावत्त्वंच स्वनिरूपितवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपितज्ञाननिष्ठाऽवच्छेदकतानिरूपितशून्य-
त्वनिष्ठाऽवच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपिताव्यापकत्वनिष्ठावच्छेदकतानिरूपितवि-

षयितानिष्ठाऽवच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्व—स्वनिरूपितावच्छिन्नत्वसम्ब-
न्धाऽवच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितविषयितानिष्ठाऽवच्छेदकत्व-
निष्ठाऽवच्छेदकतानिरूपितवृत्तित्वनिष्ठाऽवच्छेदकतानिष्ठाऽवच्छेदकतानिरूपितभेदनिष्ठाऽवच्छेदकत्व—
निष्ठाऽवच्छेदकतानिरूपितप्रतियोमित्वनिष्ठाऽवच्छेदकत्वनिष्ठाऽवच्छेदकत।निरूपिताऽवच्छेदकत्वनिष्ठप्र-
तियोगित्वनिष्ठाऽवच्छेदकत्वानिरूपिततादृशाभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरू-
पितावच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितप्रतिबन्धकतावृत्त्युभयावृत्तिधर्म्मावच्छिन्नाऽवच्छेदकतानिरू-
पिताभावनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठाऽवच्छेदकता।निरूपितप्रतियोगित्वनिष्ठाऽवच्छेदक-—

तानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपितनिश्चयनिष्ठाऽवच्छेदकतानि-
रूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभयसम्बन्धेनेति, गग-
नाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधस्य व्यापकसामानाधिकर-
ण्यरूपव्याप्तिविशिष्टप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षस्य लक्ष्यत्वे तत्संग्रहाय यत्किंचित्प्रातिबन्धकता-
वच्छेदकविषयितानिष्ठभेदप्रतियोगितावच्छेदकत्व-प्रकृतानुमितिप्रतिबन्धकताविशिष्टविषयित्वाऽवृत्ति-
त्व-विरोध्यनुमितिजनकताविशिष्टविषयित्वाऽवृत्तित्वैतत्रित्वावच्छिन्नप्रतियोगिताकाभावो निरूप्यतायां

वक्तव्यः, अनुगमे च द्वितीयसम्बन्धघटकस्वावच्छिन्ननिरूप्यतावृत्तिरभाव एतत्रित्वावच्छिन्नप्रतियोगिताको विवक्षणीय इति दिक् ॥ श्रीः ॥

**स्वावच्छिन्नानिरूपितविशिष्टविषयित्वानवच्छिन्नप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताको यो धर्मस्तद्वत्त्वं वा समुदितलक्षणार्थ इति ॥ ॥**

स्वावच्छिन्नानिरूपितयत्किंचिद्विशिष्टविषयित्वावच्छेद्यतावदन्यप्रतिबन्धकतानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्स्वं तद्वत्त्वं लक्षणम्, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपितशुद्धव्यभिचारत्वविषयित्वानवच्छेद्यप्रतिबन्धकताच न मेयत्वविशिष्टव्यभिचारप्रतिबन्धकता किंत्वन्यैवेति नातिव्याप्तिः, व्यभिचारघटितबाधत्वावच्छिन्नाऽनिरूपितव्यभिचारविषयितासामान्यावच्छेद्यतावदन्या तादृशबाधप्रतिबन्धकता भवतीति लक्षणसमन्वयः, व्यभिचारविशिष्टबाधत्वावच्छिन्नानिरूपितशुद्धबाधविषयिताशुद्धव्यभिचारविषयितानवच्छेद्यप्रतिबन्धकता तदुभयप्रतिबन्धकताभिन्नैवेति न तदनतिरिक्तवृत्तिर्व्यभिचारविशिष्टबाधत्वावच्छिन्नविषयितेति नातिव्याप्तिः, सर्वं गगनवदित्यत्र गगनाभाववद्घटत्वावच्छिन्नानिरूपितगगनाभाववत्पटादिविषयित्वानवच्छेद्यप्रतिबन्धकतायां गगनाभाववद्घटत्वावच्छिन्नविषयिताया अनवच्छेदकत्वात्तत्राव्याप्तिरतः स्वावच्छिन्नानिरूपितविषयितायां स्वावच्छिन्नाविषयित्वा-

ऽव्यापकविषयिताशून्यज्ञानीयत्वं विवक्षणीयम्, तथाच बाधत्वावच्छिन्नाऽनिरूपितबाधत्वावच्छिन्नवि-
यिताऽव्यापकविषयिताशून्यज्ञानीयविषयिता बाधैकदेशपदार्थविषयिता तत्सामान्यानवच्छेद्याच बाधप्रति-
बन्धकतेति लक्षणसमन्वयः, एवं तत्रैव यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमपि वि-
शेषणं बोध्यम्, अन्यथा ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकवि-
षयिताशून्यज्ञानीयतदवच्छिन्नाऽनिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्यावच्छेद्या न तादृ-
शबाधनिश्चयप्रतिबन्धकता जातिमान्वह्न्यभाववानिति ज्ञानीयतादृशविषयितायां तादृशप्रतिबन्धकता-
वच्छेदकत्वाभावात् किंत्वन्यदेव किंचिद्विषयित्वादिकं तदन्याच तादृशबाधप्रतिबन्धकता तदवच्छे-

दिकाच तादृशजातिमद्ध्रहृत्यभाववद्ध्रदत्वावच्छिन्नविषयितेति तत्रातिव्याप्तेः, तन्निवेशे तु वह्न्यभाववद्ध्र-
दत्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयजातिमान्वह्न्यभाववानिति ज्ञानव्यावृत्तनिरुक्तविष-
यितासामान्यावच्छेद्यायामेव बाधप्रतिबन्धकतायामुक्तविशिष्टविषयिताया अवच्छेदकत्वान्नातिव्याप्तिः,
अत्र प्रथमस्वरूपसंबन्धरूपावच्छेदकताया निवेशाद्ध्रहृत्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदे नातिव्याप्तिः
तादृशह्रदत्वावच्छिन्नानिरूपितवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितानिष्ठस्वरूपसंबन्धरूपावऽच्छेदक-
तानिरूपकान्या या प्रतिबन्धकता तदवच्छेदकत्वस्य तादृशविशिष्टविषयितायामभावादतो विशिष्टद्व-
याऽघटितत्वं न निवेशनीयम्, एवं नीलरूपाभाववन्नीले नातिव्याप्तिः। नचैवमपि हेतुमत्पक्षघटि-

ताऽसाधारण्येऽव्याप्तिस्ताद्दशासाधारण्यत्वावच्छिन्नाऽनिरूपिततद्विषयित्वाऽव्यापकविषयिताशून्यज्ञानीयहेतुमत्पक्षविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयहेतुमत्पक्षविषयितासामान्यानवच्छेद्यप्रतिबन्धकतायां ताद्दशासाधारण्यविषयिताया अनवच्छेदकत्वादिति वाच्यम् । स्वावच्छिन्नानिरूपितविषयितायामसाधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वस्य विवक्षणीयत्वात् तथाच हेतुमत्पक्षविषयिताच न ताद्दशोभयाभाववती किंत्वसाधारण्यघटकपदार्थान्तरविषयितैव तत्सामान्यानवच्छेद्या च ताद्दशासाधारण्यावच्छिन्नप्रतिबन्धकतेति नाव्याप्तिः, एवं प्रतिबन्धकतावच्छेदकविषयिताशालिनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वाऽसाधारण्यविषयकत्वोभयाभावो विवक्षणीयस्तेन ह्रदो वह्निमाञ्जलादित्यादावसाधारण्यस्य नासंग्रहः तथाच स्वावच्छिन्नाऽनिरूपितस्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयताद्दशविशिष्टविषयिताऽव्यापकविषयिताशून्यज्ञानीयासाधारण्यविषयिताभिन्नत्वासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाऽभाववद्विशिष्टविषयतासामान्यावच्छेद्यतावदन्यप्रतिबन्धकता पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वासाधारण्यविषयकत्वोभयाभाववदनाहार्य्यत्वादिविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापिका तद्रूपावच्छिन्नत्वं पर्य्यवसितलक्षणम्, अत्रायमनुगमः पदार्थविशिष्टपदार्थवत्त्वं हेत्वाभासत्वम्, पदार्थवैशिष्ट्यंच स्वतादात्म्य–स्वविशिष्टविषयितावदन्यप्रतिबन्धकतावृत्तित्वोभयसंबन्धेन, विषयितायां स्ववैशिष्ट्यं

च स्वावच्छिन्नानिरूपितत्व-स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन, विषयितावत्ता च स्वनिरूपकतावच्छेदकधर्म्मविशिष्टाऽसाधारण्यविषयिताभिन्नत्वघटितोभयाभाववद्विषयितात्वव्यापकावच्छेदकताकत्वसंबन्धेन, विषयितायां धर्म्मवैशिष्ट्यंच स्वावच्छिन्ननिरूपकताकत्व-स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन, धर्म्मे प्रतिबन्धकतावृत्तित्वं च पक्षधर्म्मिकहेतुमत्ताज्ञानाऽकालीनत्वाऽसाधारण्यविषयकत्वोभयाभाववदनाहार्य्यत्वादिविशिष्टस्वविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन, नि-

श्रये स्ववैशिष्ट्यंच स्वावच्छिन्नविषयितावत्त्व–स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वोभयसंबन्धेनेति दिक् ॥ श्रीः ॥

अत्र केचित्–स्वसजातीयविशिष्टान्तराऽघटितत्वमेव यत्पदार्थे विशेषणं देयं, साजात्यं च हेत्वाभासविभाजकरूपेण, तच्च रूपं बाधत्वव्यभिचारत्वादीति ॥

अत्र स्ववृत्तियद्धेत्वाभासविभाजकतावच्छेदकं तद्धत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्धत्त्वं विशिष्टान्तराऽघटितत्वमिति फलितम् ।

नन्वत्र स्वं बाधत्वादि वह्न्यभाववद्ध्रदत्वादि तद्वृत्तिहेत्वाभासविभाजकतावच्छेदकरूपवत्तदवाच्छिन्नाऽविषयकप्रतीतिविषयितावच्छेदकाप्रसिद्धिः बाधत्वविपरीतबाधत्वादौ तादृशस्यैस्यकाभावात्, अथात्र बाधत्वत्वव्यभिचारत्वत्वादिकमेव तादृशं तत्र बाधत्वत्वं नाम पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाऽव्यापकसाध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाऽव्यापकपक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यानाहार्याऽप्रामाण्यज्ञानानास्कन्दिताऽव्याप्यवृत्तित्वभ्रमानास्कन्दितनिश्चयवृत्तित्वाभाववत्त्वम्, अत्र वृत्तित्वंच स्वावच्छिन्ननिरूपकताकविषयितासंबन्धावच्छिन्नं ग्राह्यम्, साध्याऽप्रसिद्धिपक्षाप्रसिद्धित्वयोर्बाधत्ववृत्तितादृशरूपवारणायाव्यापकतान्तद्वयं तदवारणे अवृत्तिजलं ह्रदावृत्तीत्यत्र ह्रदवृत्तिजलात्मकबाधस्य पक्षाप्रसिद्ध्यवृत्तिजलेन घटितस्यासंग्रहापत्तेः, एवं जलम् अवृत्तिजलकालीनह्रदावृत्तीत्यत्र जलकालीनह्रदवृत्तित्ववज्जलात्मकबाधस्य वृत्तित्ववज्जलात्मकसाध्याप्रसिद्धिघटितस्यासंग्रहापत्तेश्च, अत्र साध्यीभूताभावप्रतियोगिवृत्तित्वं साध्यतावच्छेदककुक्षौच जलांशे वृत्तित्वं संयोगेन, तेन तादृशानुमितेर्नाहार्यतापत्तिः नवा बाधस्य साध्याप्रसिद्ध्यघटितत्वम्, एवं सत्प्रतिपक्षतात्वं च विशिष्टपक्षग्रहत्वाव्यापकविशिष्टसाध्यग्रहत्वाव्यापकविशिष्टपक्षविशिष्टसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यानाहार्यत्वादिविशिष्टनिश्चयवृत्तित्वाभाववत्त्वे सति तादृशप्रतिबन्धकतावच्छेदकविषयिताघटितधर्मावच्छिन्नजन्यतानिरूपि-

तजनकताशून्यताद्दशनिश्चयवृत्तित्वाभाववत्त्वम्, अत्राप्यव्यापकान्तद्वयं ताद्दशरूपस्य पक्षाप्रसिद्धिसाध्याप्रसिद्धित्वयोर्वारणाय, अन्यथा अवृत्तिरूपं द्रव्यवृत्तित्वाभाववदित्यत्र द्रव्यवृत्तित्वव्याप्यगुणत्ववद्रूपात्मकस्य सत्प्रतिपक्षस्य वृत्तित्वव्याप्यगुणत्ववद्रूपात्मकपक्षाप्रसिद्धिघटितस्यासंग्रहापत्तिः, एवं रूपमम् अवृत्तिरूपकालीनद्रव्यवृत्तित्वाभाववदित्यत्र रूपकालीनद्रव्यवृत्तित्वव्याप्यगुणत्ववद्रूपात्मकसत्प्रतिपक्षस्य वृत्तित्वव्याप्यगुणत्ववद्रूपात्मकसाध्याप्रसिद्धिर्घटितस्यासंग्रहापत्तिः, अत्र द्वितीयदलघटकप्रतिबध्यतायामव्यापकान्तद्वयं नोपादेयं प्रथमदले तद्विशेषणादेव पक्षाऽप्रसिद्धित्वसाधारण्याभावात्, प्रथमदलमात्रस्य बाधत्वसाधारण्यात् द्वितीयोपादानं तथासति आधेयत्वं निरूपितत्वाभा-

ववदित्यत्र बाधघटितसत्प्रतिपक्षस्यासंग्रहापत्तेः, वस्तुतो द्वितीयदलमात्रमेव सत्प्रतिपक्षतात्वं तावतैव बाधत्वादिसाधारण्याभावात् तदानीं तत्रैवाव्यापकान्तद्वयं विशेषणम्, स्वरूपासिद्ध्यादिकं द्विविधं तत्र स्वरूपासिद्धितात्वं विशिष्टपक्षग्रहत्वाऽव्यापकविशिष्टहेतुग्रहत्वाऽव्यापकविशिष्टपक्षहेतुवैशिष्ट्याऽवगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्याऽनाहार्य्यत्वाऽदिविशिष्टनिश्चयवृत्तित्वाभावः प्रथमम्, अत्राव्यापकान्तद्वयानुपादानेऽवृत्तिजलं वह्निमद्ध्रदावृत्तित्वादित्यत्र ह्रदवृत्तिजलात्मकस्वरूपासिद्धेर्वृत्तिजलात्मकपक्षाऽप्रसिद्धिघटिताया जलं वह्निमदवृत्तिजलकालीनह्रदावृत्तित्वादित्यत्र जलकालीनह्रदवृत्तिजलात्मकस्वरूपासिद्धेर्वृत्तिजलात्मकसाधनाप्रसिद्धिघटितायाश्चासंग्रहापत्तिः, द्वितीयस्वरू-

पासिद्धितात्वं विशिष्टहेतुपक्षग्रहत्वाऽव्यापकविशिष्टपक्षहेतुवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरू-
पितप्रतिबन्धकतावच्छेदकविषयितावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यतानिरूपितजन-
कताशून्यानाहार्यत्वादिविशिष्टनिश्चयवृत्तित्वाभावः, अत्राव्यापकान्तानुपादाने उक्तस्थलयोरेव ह्रदवृ-
त्तित्वव्याप्यवज्जलात्मकस्वरूपासिद्धेः वृत्तित्वव्याप्यवज्जलात्मकपक्षाप्रसिद्धिघटितायाः जलकालीन-
ह्रदवृत्तित्वव्याप्यवज्जलात्मकस्वरूपासिद्धेः वृत्तित्वव्याप्यवज्जलात्मकसाधनाप्रसिद्धिघटितायाश्चासंग्रहाप-
त्तिः, अत्र व्यभिचारतात्वं विशिष्टसाध्यसाधनग्रहत्वाऽव्यापकविशिष्टसाधनधर्मिकविशिष्टसाध्यव्याप्तिवैशि-
ष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावः,अत्राव्यापका-



न्तानुपादाने अभाववदवृत्तिवह्निकालीनधूमवान्वह्नेरित्यत्र वह्निकालीनधूमाभाववद्वृत्तिवह्न्यात्मकव्यभिचा-
रस्याभाववद्वृत्तिवह्न्यात्मकसाध्याऽप्रसिद्धिघटितस्य वह्निमान् अभाववदवृत्तिद्रव्यत्वादित्यत्र वह्न्यभावव-
द्वृत्तिद्रव्यत्वात्मकव्यभिचारस्याभाववद्वृत्तिद्रव्यत्वात्मकसाधनाऽप्रसिद्धिघटितस्यासंग्रहापत्तिः, द्वितीयव्य-
भिचारतात्वमुक्तप्रतिबन्धकतावच्छेदकविषयितावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्मावच्छिन्नजन्यता-
निरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभावः, अत्रापि प्रतिबध्यतायामव्यापकान्तानुपादाने उक्तस्थ-
लयोर्वह्निकालीनधूमाभाववद्वृत्तित्वव्याप्यवद्वह्निरूपव्यभिचारस्याभाववद्वृत्तित्वव्याप्यवह्निरूपसाध्याप्रसि-
द्धिघटितस्य वह्न्यभाववद्वृत्तित्वव्याप्यवद्द्रव्यत्वरूपव्यभिचारस्याऽभाववद्वृत्तित्वव्याप्यवद्द्रव्यत्वरूपसाध-

नाप्रसिद्धिघटितस्य चासंग्रहापत्तिः, विशिष्टसाध्यसाधनग्रहत्वाव्यापकसाध्यसाधनधार्म्मिकसाधनसाध्यसामानाधिकरण्यप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यताद्दशनिश्चयवृत्तित्वाभावः प्रथमं विरोधतात्वम्, अत्राऽव्यापकान्तानुपादाने गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदभावकालीनगोत्ववानश्वत्वादित्यत्राभावकालीनगोत्वाधिकरणनिरूपितवृत्तित्वाऽभाववदश्वत्वरूपविरोधस्य गोत्वाधिकरणनिरूपितवृत्तित्वाभावरूपसाध्याऽप्रसिद्धिघटितस्य गोत्ववान् गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदभावकालीनाऽश्वत्वादित्यत्र गोत्वाधिकरणनिरूपितवृत्तित्वाभाववदश्वत्वात्मकविरोधस्य गोत्वाधिकरणनिरूपितवृत्तित्वाभावरूपसाधनाप्रसिद्धिघटितस्य चासंग्रहापत्तिः, अत्र साध्यसाधनतावच्छेदककुक्षौ

अभावत्वावच्छेदेन गोत्वाधिकरणनिरूपितवृत्तित्वाभावः प्रविष्टः स चाभावः प्रतियोगितासंबन्धावच्छिन्नो ग्राह्यः, अन्यथा गोत्वाधिकरणनिरूपितवृत्तित्वाभावस्य साध्यसाधनाप्रसिद्धित्वाऽसंभवात् निरुक्तप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्म्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽपरं विरोधतात्वम्, अत्र प्रतिबध्यतायामव्यापकान्तानुपादाने अभावाभाववद्गगनकालीनवह्निमान् गगनादित्यत्र गगनकालीनवह्निमान् गगनादित्यत्र च वह्न्यधिकरणनिरूपितवृत्तित्वाभावव्याप्यवद्गगनरूपाविरोधस्याऽभावव्याप्यवद्गगनरूपसाध्याप्रसिद्धिघटि-तस्य वह्निमान् अभावाभाववद्गगनादित्यत्र तादृशसाधनाप्रसिद्धिघटितस्य तादृशविरोधस्य चासंग्रहा-

पत्तिः, विशिष्टपक्षग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभाव एकमाश्रयासिद्धितात्वम्, तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नविधेयताघटितधर्म्मावच्छिन्नजन्यतानिरूपितजनकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽपरम्, एवमेव साध्याऽप्रसिद्धितात्वद्वयं साधनाप्रसिद्धितात्वद्वयं चोह्यम्, विशिष्टसाध्यग्रहत्वाव्यापकसाध्यधर्मिकात्यन्ताभावप्रतियोगित्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाभावोऽनुपसंहारितात्वम्, अत्राव्यापकान्तानुपादाने निरूपितत्वाभाववत्प्रतियोगित्वकालीनप्रमेयत्ववानित्यत्र प्रमेयत्ववृत्त्यभावप्रतियोग्यत्यन्ताभावनिरूपितप्रतियोगित्वरूपानुपसंहारित्वस्य निरूपितत्ववत्प्रतियो-



गित्वरूपसाध्याप्रसिद्धिघटितस्यासंग्रहापत्तिः, विशिष्टसाधनग्रहत्वाव्यापकविशिष्टसाधनधर्मिकात्यन्ताभावप्रतियोगित्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वाऽभावोऽप्यनुपसंहारितात्वम्, अत्राप्यव्यापकान्तानुपादाने निरूपितत्वाभाववत्प्रतियोगित्वकालीनप्रमेयत्वहेतुकस्थलीयोक्तानुपसंहारित्वासंग्रहापत्तिः, एवमपरविधमनुपसंहारितात्वमप्यूह्यम्, तथाच बाधत्वादिवृत्तिश्चैतादृशाभावो विपरीतबाधत्वादिसाधारणः तथाच स्ववृत्त्येतदभावान्यतमवत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्वत्त्वं स्वसजातीयविशिष्टान्तराऽघटितत्वम् तथाच न मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिः । मैवम् । तथापि

व्यभिचारघटितबाधाद्यसंग्रहात् तत्र बाधत्वे व्याप्तिज्ञानप्रतिबन्धकताशून्यनिश्चयवृत्तित्वाभावस्य व्यभिचारतात्वस्य पक्षे साध्यवत्ताज्ञानप्रतिबन्धकताशून्यनिश्चयवृत्तित्वाभावरूपस्य बाधतात्वस्य च सत्त्वात् स्ववृत्तिव्यभिचारतात्वरूपतावदभावान्यतमवत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकशुद्धव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशबाधत्वेऽभावात्। नच स्ववृत्तितादृशान्यतमयत्किञ्चिदभाववद्विशिष्टान्तराघटितत्वस्य विवक्षणाद्बाधतात्वरूपयत्किंचिदभाववद्विपरीतबाधत्वाऽघटितत्वस्य तादृशबाधत्वे सत्त्वेन लक्षणसमन्वय इति वाच्यम्। तथापि वह्न्यभाववज्जलादिमत्कालीनजलवद्ध्रदेऽतिव्याप्तेः तत्र पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धक-

ताशून्यतादृशनिश्चयवृत्तित्वाभावो यस्तादृशहृदत्ववृत्तिः तद्वत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छे-
दकं यद्वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वं तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात् । नच तादृशप्र-
तिबन्धकताशून्यनिश्चयवृत्तित्वाभावमपहाय तादृशप्रतिबन्धकतावच्छेदकताशून्याऽनाहार्य्यज्ञानीयविषयि-
तावृत्तित्वाभावो विवक्षणीयः, वृत्तित्वं चावच्छिन्ननिरूपकताकत्वसम्बन्धेन, एवं च वह्न्यभाववज्जल-
वद्वृत्तिजलवद्ध्रदत्ववृत्तितादृशाभाववद्वह्न्यभाववज्जलवत्त्वमपीति तदवच्छिन्नाऽघटितत्वाभावात्तादृशवि-
शिष्टे नातिव्याप्तिः, तादृशपाषाणमयत्वविशिष्टपर्वतवारणेन विशेष्यदलसार्थक्यमपि भवतीति वाच्य-
म् । तथापि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधाव्याप्तेः तादृशबाधत्ववृत्तिज्ञानवै-

शिष्टयावच्छिन्नतादृशप्रतिबन्धकतावच्छेदकताशून्यतादृशविषयितावृत्तित्वाभावस्य तादृशबाधत्वाव-
च्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकाभाववत्तादृशघटत्वसाधारणतया तदघटितत्वस्य तत्राभावात्,
एवमाहार्य्यस्थलासंग्रहश्च तत्र प्रतिबन्धकत्वादिनिर्वचनासम्भवादिति चेन्न। बाधतात्वघटकप्रतिबन्धक-
तावच्छेदकत्वाभावश्च न स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः अपितु स्वरूप-स्वनिरूपकप्रति-
बन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयि-
तात्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, प्रतिबध्यतावैशिष्ट्यञ्च स्वाश्रयत्व-स्वनिरूपित-
मुख्यविशेष्यतावृत्त्यवच्छेदकतानिरूपिताऽवच्छेदकतावत्प्रकारताविशिष्टविशेष्यतानिरूपकाऽव्याप्यवृ-



त्तित्वज्ञानाभाववत्त्वोभयसंवन्धेन, तथाच तादृशबाधत्ववृत्तिरेतादृशवृत्तित्वाभावश्च न अभाववत्तादृ-
शघटत्वसाधारणः तदवच्छिन्नविषयितायां तादृशोभयसंवन्धावच्छिन्ननिरुक्तप्रतिबन्धकतावच्छेदकत्वा-
भावसत्त्वेन तत्राभाववत्तादृशघटत्वरूपधर्म्मस्यावच्छिन्ननिरूपकताकत्वसम्बन्धेन सत्त्वात्, एवं गगना-
भाववदभाववत्कालीनघटो वह्निमान् गगनादित्यत्र गगनाभाववत्तादृशघटरूपस्वरूपासिद्धयव्याप्तिवारणाय
विशिष्टपक्षहेतुग्रहत्वाऽव्यापकविशिष्टपक्षधर्मिकविशिष्टहेतुमत्ताग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिब-
न्धकतावच्छेदकत्वानिष्टनिरुक्तसम्बन्धद्वयावच्छिन्नप्रतियोगिताकाभाववद्विषयितावृत्तित्वाभावः स्वरूपा-
सिद्धितावृत्तिर्विवक्षणीयः, एवं गगनवद्गगनाभाववदभाववत्कालीनघटस्य यत्र साध्यता हेतुता पक्षता

च तत्र साध्याप्रसिद्धि-हेत्वप्रसिद्धि-पक्षाप्रसिद्धि-संग्रहाय साध्याऽप्रसिद्धितात्वादिकमप्येवमेव निर्वाच्यम्, सत्प्रतिपक्षतात्वं तु विशिष्टपक्षसाध्यग्रहत्वाव्यापकविशिष्टपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टविषयिताघटितधर्म्मावच्छिन्नकार्य्यताप्रातियोगिककारणतावच्छेदकताशून्याऽनाहार्य्यविषयितावृत्तित्वाभावः, अत्रावच्छेदकत्वाभावश्च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक एव ग्राह्यः, विषयितायां प्रतिबन्धकतावैशिष्ट्यं च स्वावच्छेदकत्व-स्वनिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वोभयसंबन्धेन, अन्यविधं स्वरूपासिद्धितात्वादिकमपि सत्प्रतिपक्षतात्ववदेव निर्वाच्यम्, तेन गगनाभावव्याव्यवद्गगनाभाववदभाववत्कालीनघटस्य स-

त्प्रतिपक्षस्वरूपासिद्ध्याद्यादिरूपस्याभावव्याप्यवत्तादृशघटघटितत्वेऽपि नासंग्रहः । नन्वत्र किं तावदसाधारण्यतात्वं न तावद्विशिष्टपक्षसाध्यग्रहत्वाऽव्यापकविशिष्टपक्षसाध्यवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताशून्याऽनाहार्य्यज्ञानविषयितावृत्तित्वाभावः, अत्राव्यापकान्तविशेषणान्निरूपितत्वाभाववत्प्रतियोगित्वं गगनत्ववदाधेयत्वादित्यादौ गगनत्वव्यापकीभूताभावनिरूपितप्रतियोगित्ववदाधेयत्वरूपासाधारण्यस्य पक्षासिद्धिघटितस्य घटो निरूपितत्वाभाववत्प्रतियोगित्वकालीनगगनत्ववानाधेयत्वादित्यत्र साध्याऽप्रसिद्धिघटितस्य च नासंग्रह इति वक्तुं शक्यम् तस्याभावस्यावच्छेदकधर्म्मसाधारणतया ह्रदो वह्न्यभाववज्जलवत्कालीनवह्निमान् जलादित्यत्र तादृशवह्निव्यापकीभूता-

भावप्रतियोगिजलात्मकासाधारण्येऽव्याप्तेः, तादृशासाधारण्यनिश्चयस्य जलवान्ह्रद इति निश्चयकालीनस्यैव जलवान्वह्न्यभाववानिति निश्चयस्यापि तादृशनिश्चयकालीनस्य तादृशवह्निविशेषावगाह्यनुमितिंप्रति प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकताशून्यविषयितावृत्तित्वाभावस्य तादृशासाधारण्यत्ववह्न्यभाववज्जलवत्त्वसाधारणतया असाधारण्यस्य वह्न्यभाववज्जलवृत्तित्वावच्छिन्नघटितत्वात्, यद्वा जलं वह्निमज्जलादित्यत्रासाधारण्येऽव्याप्तिः प्रतियोगित्ववद्वह्न्यभाववत्प्रतियोगित्ववज्जलमिति निश्चययोर्ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकताशून्यतादृशविषयितावृत्तित्वाभावस्य प्रतियोगित्ववज्जलत्वेऽपि सत्त्वेनासाधारण्यस्य तद्घटितत्वादिति चेन्न। निरुक्तप्रतिबध्यतानिरूपितनिश्चयाविशिष्टनि-



श्चयत्वानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभाववत्तादृशविषयितावृत्तित्वाभावस्य विवक्षणीयत्वात्, निश्चयवैशिष्ट्यं च स्वसामानाधिकरण्य–स्वीयप्रकारताविशिष्टप्रकारतानिरूपितविशेष्यतावत्त्वोभयसंबन्धेन, अवच्छेदकधर्म्मदर्शनप्रतिबन्धकता च तादृशनिश्चयत्वावच्छिन्नैव, असाधारण्यनिश्चयप्रतिबन्धकता तु निश्चयविशिष्टनिश्चयत्वानवच्छिन्ना असाधारण्यनिश्चये पक्षधर्म्मिकहेतुमत्तानिश्चयस्य स्वीयप्रकारताविशिष्टप्रकारतानिरूपितविशेष्यत्वसम्बन्धेनाभावात् उक्तस्थलेऽसाधारण्यतात्वस्य प्रतियोगित्ववज्जलत्वावृत्तितया अव्याप्त्यनवकाशात् तादृशासाधारण्यतात्वस्य बाधत्वसाधारण्यवारणाय तादृशावच्छेदकत्वाभावः स्वरूप–स्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिब-

ध्यतानवच्छेदकविषयितात्वोभयसंबन्धावच्छिन्नो विवक्षणीयः । न चेदानीं विशेष्यदलवैयर्थ्यं पाषाणमयत्ववत्पर्वतत्वादौ निरुक्तबाधतात्वस्याभात् तदवच्छिन्नविषयितायां स्वरूपसंबन्धेन पक्षे साध्यवैशिष्ट्यावगाहिबुद्धिप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वेपि द्वितीयसंबन्धेनाभावेन तादृशावच्छेदकत्वाभाववद्विषयितावृत्तित्वाभावस्य निरुक्तधर्मेऽभावात् इति वाच्यम् । तथापि कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिवारणाय तदावश्यकत्वात् । नन्वेवं विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यमिति विरुद्धम् कपिसंयोगी धूमान्यधूमादित्यत्र कपिसंयोगाभाववद्वृक्षस्य विशिष्टान्तराऽघटितत्वस्य सत्त्वेन तदुत्तरानुमितिसामान्ये उभयाभावस्य सत्त्वेन तद्वारणेन तत्सार्थक्यादिति चेत् ।

अत्र केचित्। वैयर्थ्यमित्यस्य नोक्तप्रयोजनकत्वमित्यर्थः आहार्यस्थले घटादिवारणरूपं प्रयोजनं न सिद्ध्यतीति भावः अत एव तादृशप्रयोजनसिद्ध्यर्थं प्रतियोगिनि स्वत्वमन्तर्भाव्य शङ्कते नचेत्यादिनेति वदन्ति। एवं प्रतिबन्धकताघटितबाधतात्वादिकमाहार्यस्थलीयदोषसाधारणमपि वक्तुं शक्यम् प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताव्यापकं यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारत्वं तद्रूपावच्छिन्नविशेष्यतानिरूपिततद्रूपावच्छिन्नप्रकारताशालिग्रहत्वव्यापकत्वं प्रतिबध्यतायां निवेश्य बाधतात्वस्य एवमेव दोषान्तरतावच्छेदकधर्मवृत्तिरूपस्यापि वक्तव्यत्वात्, अत्रायमनुगमः पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभ-

याभावनिष्ठो यः किंचिद्रूपाऽवच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावनिरूपितविरोधिविषय-
ताप्रयुक्तत्वविशिष्टस्वनिष्ठनिरूपकतानिरूपिताधिकरणतासंबन्धावच्छिन्नप्रतियोगित्वं नास्तीति प्रतीति-
सिद्धोभावस्तन्निरूपितप्रतियोगितानिरूपिताभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरू-
पितानुमितिनिष्ठावच्छेदकतानिरूपितोत्तरत्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपित-
विषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपविशिष्टरूपवत्त्वं लक्षणम्,
रूपे रूपवैशिष्ट्यं च स्वतादात्म्य-स्वविशिष्टावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयिता-
त्वावच्छिन्नप्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, अवच्छेदकतायां स्ववैशिष्ट्यं
च स्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयितानिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छे
दकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकप्रतीतिनिष्ठावच्छेदकतानिरूपकविषयतानिष्ठावच्छेदकता-
निरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठावच्छेदकतानिरूपकत्व स्वानिष्ठाधेयतासम्ब
न्धावच्छिन्नावच्छेदकतानिरूपकताद्दशाभावान्यतमत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छे-
दकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेनेति। नच तथाप्यवृत्तिजलकालीनजलाभाव-
वान्ह्रदो वह्निमानित्यत्राश्रयासिद्धावव्याप्तिः तत्र ह्रदवृत्तिजलकालीनजलरूपाश्रयासिद्धेर्वृत्तिजलात्मकस्व-
सजातीयविशिष्टान्तरघटितत्वादिति वाच्यम्। आहार्यस्थलीयदोषसाधारण्यायोक्ताविवक्षायां प्रकृतपक्ष-

तावच्छेदकविशिष्टपक्षग्रहनिष्ठाकिंचिद्रूपावच्छिन्नविशेष्यतानिरूपितकिंचिद्रूपावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धाभावाप्रतियोगि यत् किंचित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकताशून्यविषयितावृत्तित्वाभावरूपमाश्रयासिद्धितात्वं वक्तव्यम्, ग्रहे तादृशप्रकारतावत्त्वंच स्ववि-शिष्टविशेष्यतावत्त्वसंबन्धेन, विशेष्यतायां स्ववैशिष्ट्यं च स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व–स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन, अत्र प्रकारतायां यत्किंचित्वमभावत्रयप्रतियोगितावच्छेदककोटावपि अन्यतमत्वघटकप्रथमभेदप्रतियोगितावच्छेदककुक्षौ सामान्यरूपेणैव प्रकारताया निवेश इति ध्येयम्, तथाच तादृशस्थले पक्षतावच्छेदकाविशि-

ष्टपक्षग्रहनिष्ठयत्किंचित्प्रकारता ह्रदत्वावच्छिन्नविशेष्यतानिरूपितजलकालीनजलाभावत्वावच्छिन्ना आ-
श्रयासिद्ध्यन्तरनिश्चयप्रतिबध्यतावच्छेदकयत्किंचित्प्रकारता जलत्वावच्छिन्नविशेष्यतानिरूपिताऽवृ-
त्तित्वत्वावच्छिन्नप्रकारता च, अत्र प्रथमप्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यताघटिताश्रयासिद्धितात्वं
न वृत्तिजलत्ववृत्ति वृत्तिजलमित्याकारकनिश्चयस्य जलकालीनजलाभाववान् ह्रद इति ज्ञानं प्रत्य-
प्रतिबन्धकत्वात्, द्वितीयप्रकारताघटिताश्रयासिद्धितात्वस्य जलकालीनजलवद्ध्रदरूपाश्रयासिद्धि-
त्वे सत्त्वेऽपि न तत्तद्घटकमिति तत्र नाव्याप्तिः। नन्वेवं सति ह्रदो वह्निमानित्यादौ दोषऽव्याप्तिः
तत्र विशिष्टपक्षग्रहनिष्ठोक्ताभावाप्रतियोगिनी या प्रकारता उक्तोभयसम्बन्धेन तद्विशिष्टविशेष्यता-

वद्ग्रहाप्रसिद्धेरिति चेत्। मैवम्। सर्वत्राश्रयासिद्धिताात्वस्य पक्षतावच्छेदकाभाववद्विषयितावृत्तित्वा-
भावरूपस्य वक्तव्यत्वात् तदभावनिरूपितपक्षतावच्छेदकनिष्ठप्रतियोगितावच्छेकसंबन्धश्च स्वविशि-
ष्टग्रहवृत्तिर्यत्किंचिद्रूपावच्छिन्नविशेष्यतानिरूपितर्यत्किंचिद्रूपावच्छिन्नप्रकारता नास्तीति प्रतीतिसि-
द्धाभावनिरूपितप्रतियोगित्वाभाववद्यत्किंचित्प्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रातिबन्ध-
कतावच्छेदकत्ववत्त्वसंबन्धेन, प्रकारतावैशिष्ट्यंच प्रागुक्तसंबन्धेन, अवच्छेदकतावत्त्वं च प्राक् प्रति-
योगितावच्छेदकतयोक्तस्वरूप–स्वनिरूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टनिश्चयत्वव्यापक–
प्रतिबन्धकतानिरूपितप्रातिबध्यतावच्छेदकत्वोभयसम्बन्धेन, एवं चायं सम्बधो निरवच्छिन्नपक्षता-



वच्छेदकस्थले तस्य व्यधिकरणसम्बन्ध एव तेन तदभावः केवलान्वयीति तद्वद्वृत्तित्वाभावस्या-
प्रसिद्ध्याऽऽश्रयासिद्धिरप्रसिद्धैव आश्रयासिद्धिघटिताश्रयासिद्धौ च नाव्याप्तिरिति ध्येयम् । वस्तु-
तस्तु अन्यतमत्वं न तद्भिन्नभिन्नत्वं किन्तु प्रत्येकं तावदवृत्तिधर्मशून्यत्वं तथाचात्रैवं निवे-
शः पक्षतावच्छेदकविशिष्टपक्षग्रहत्वव्यापकप्रकारतानिष्ठोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकाव-
च्छेदकतायाः परम्परया निरूपकावच्छिन्ननिरूपकताकत्वसम्बन्धावच्छिन्नवृत्तित्वानिष्ठप्रतियोगिताकाभा-
वनिरूपितवृत्तितावानित्याकारिका या प्रतीतिस्तन्निरूपितस्य पक्षतावच्छेदकविशिष्टपक्षग्रहत्वव्यापक-
प्रकारतानिष्ठोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपकप्रकारतानिष्ठस्वविशिष्टविशेष्यत्वसम्ब–

न्धावच्छिन्नावच्छेदकतानिरूपकग्रहनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठाव-
च्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठप्रतियोगितासम्बन्धावच्छिन्नाव-
च्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकप्रतिबध्यतानिष्ठावच्छेदकतानिरूपकप्रतिबन्धकतानि-
ष्ठावच्छेदकतानिरूपकावच्छेदकत्वनिष्ठस्वरूपघटितप्रागुक्तोभयसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धा-
वच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकावच्छिन्न-
निरूपकताकत्वसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावनिरूपितवृत्तितात्वावच्छिन्नप्रका-
रतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यताप्रातियोगिकस्वरूपसम्बन्धेन योऽभावस्तद्वत्त्वे सति विशि-

ष्टसाध्यग्रहत्वव्यापकयत्किंचित्प्रकारताघटिततादृशाभाववत्त्वे सतीत्येवं रीत्या यावद्दोषविभाजकतावच्छे-
दकतावच्छेदकीभूताभावनिरूपितवृत्तित्वप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यताप्रतियोगिक-
स्वरूपसम्बन्धावच्छिन्नाभाववान्यस्तच्छून्यत्वमन्यतमत्वमिति तथाच यत्र यो दोषः प्रसिद्धस्तत्र तादृशम
दोषतावच्छेदकनिष्ठाभाववृत्तिधर्मे तादृशज्ञानीयतादृशप्रकारतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यता-
प्रतियोगिकस्वरूपसम्बन्धेनाभावो नास्तीति तद्वानन्य एव तच्छून्यत्वं च तादृशदोषतावच्छेदकवृत्त्य-
भावे वर्तत इति सर्वत्र प्रसिद्धिर्बोध्या ॥ श्रीः ॥

स्वसजातीयविशिष्टान्तरघटितं यत्स्वं तदविषयकप्रतीतिविषयत्वस्य विवक्षयाऽनुयोगिनि स्वत्वानन्तर्भावेण पदार्थान्तरेष्वतिप्रसङ्गवारकतया तद्दलसार्थक्यात् इति ॥ ॥

स्ववृत्तिताद्दशाभावान्यतमयत्किंचिदभाववत्स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तदवच्छिन्नघटिततावच्छेदकं यत्स्वं तदवच्छिन्नाऽघटितत्वं विशिष्टान्तराघटितत्वम्, अत्र स्वपदेन व्यभिचारत्वादिकं धर्तुं न शक्यते तस्य ताद्दशविशिष्टान्तरघटितत्वाभावात् किन्तु मेयत्वविशिष्टव्यभिचा-



रत्वादिकं तच्च ताद्दशव्यभिचारत्वेन घटितं तदघटितत्वाभावान्नातिव्याप्तिः व्यभिचारादेस्तदघटितत्वाद्दोषे लक्षणसमन्वयः, व्यभिचारघटितबाधेच नाव्याप्तिः ताद्दशबाधत्ववृत्तिबाधतात्वरूपाऽभाववत्ताद्दशबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारत्वं न भवति विपरीतबाधत्वं ताद्दशमपि न तद्घटितं स्वम् अतो मेयत्वविशिष्टताद्दशबाधत्वमेव स्वपदग्राह्यं तदवच्छिन्नाऽघटितत्वस्य तत्र सत्त्वात्, बाधविशिष्टव्यभिचारादौ च नातिव्याप्तिः ताद्दशव्यभिचारत्वनिष्ठो यस्ताद्दशाभावान्यतमो यत्किंचिदभावो व्यभिचारतात्वरूपः तद्वत्तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं शुद्धव्यभिचारत्वं तदवच्छिन्नघटितं स्वावच्छिन्नं भवतीति तदघटितत्वस्य स्वस्मिन्नभावात्, अत्र स्वसजातीयविशिष्टान्तरकं यत्स्वं

तदघटितत्वोक्तौ असंभवः बाधत्वादेरपि स्ववृत्तितादृशाभावान्यतमवत्स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकाविपरीतबाधत्वादिकतया स्वपदेन बाधत्वादेरपि धर्तुं शक्यत्वात्, स्वावच्छिन्ने तदवच्छिन्नघटितत्वोक्तौ च बाधस्य विपरीतबाधाऽघटिततया स्वपदेन न दोषतावच्छेदकधारणसम्भव इति तदुपात्तम्, तादृशविशिष्टान्तरघटितं यत्स्वं तदघटितत्वमनुक्त्वा तद्भिन्नत्वोक्तौ मेयत्वविशिष्टव्यभिचारविशिष्टघटेऽतिव्याप्तिः व्यभिचारतात्वाभावेन स्वपदेन तादृशघटत्वस्य धर्तुमशक्यतया स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नभेदस्य तत्र सत्त्वात्, यद्यपि मेयत्वविशिष्टव्यभिचारविशिष्टघटस्य व्यभिचारविशिष्टमेयत्वतुल्यतया तत्र चातिव्याप्तेस्स्वयमनुपदं वक्तव्यतया तत्रातिव्याप्तिवारणप्रयोज-

साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां शुद्धव्यभिचारविषयिताप्रयोज्यत्वाभावात्, स्वविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावनिवेशे स्वपदेन वह्न्यभाववद्वह्निमन्मेयत्वविशिष्टव्यभिचारश्च न धर्तुं शक्यते ज्ञानवैशिष्ट्यनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्पक्षे साध्यवैशिष्ट्यावगाहित्वाधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वासाधारण्याविषयिताऽवृत्तित्वोभयसत्त्वात्। नन्वेवमपि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः, एवं वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवत्तादृशह्रदरूपसत्प्रतिपक्षे व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तादृशसत्प्रतिपक्षमात्रे चाव्याप्तिः सर्वत्र दोषज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया दोषविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावाऽसत्त्वेन स्वपदेन तस्य धारणासंभवादिति चेन्न। स्वावच्छिन्नविषयितानिष्ठप्रयोजकतावदन्यविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताशून्यनिरुक्तोभयाभाववत्स्वावच्छिन्नविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशालिनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकान्यत्व–तादृशोभयाभावप्रयोजकाभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितप्रयोजकताविशिष्टविषयितानिरूपकतानवच्छेदकत्व–तादृशविषयिताघटितधर्मावच्छिन्नकार्यतानिरूपितकारणताविशिष्टविषयितानिरूपकतानवच्छेदकत्वैतत्त्रितयाभावस्य दोषतावच्छेदकधर्मे निवेशनीयत्वात्, विषयितायां प्रयोजकतावैशिष्ट्यं च

स्वाश्रयत्व-स्वविशिष्टविषयितावदन्यत्वोभयसंबन्धेन विषयितायां स्ववैशिष्ट्यंच स्वाश्रयत्व-स्वनिरू-
पितप्रयोज्यतावदधिकरणतानिरूपकाभावप्रतियोगितावच्छेदकताविशिष्टनिश्चयोत्तरानुमितित्वव्यापक--
विषयिताप्रयुक्ताधिकरणतानिरूपकाभावप्रतियोगित्वोभयसंबन्धेन निश्चये अवच्छेदकतावैशिष्ट्यंच स्वा-
श्रयविषयतावत्त्व-स्वविशिष्टप्रकारतावच्छेदकावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभाववत्त्वोभयसंबन्धेन
प्रकारतायां स्ववैशिष्ट्यंच स्वाश्रयत्व-स्वनिरूपितावच्छेदकताश्रयमुख्यविशेष्यतानिरूपितत्वोभयसंब-
न्धेन, अत्र मुख्यविशेष्यतानिवेशाद्वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमानित्यत्र
वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदे नातिव्याप्तिः, तादृशविषयितावत्ता च स्वव्याप्यत्व-स्वाऽव्याप-

कत्वोभयसंबन्धेन कारणतावैशिष्ट्यं च स्वावच्छेदकत्व-स्वावच्छेदकविषयितावदन्यत्वोभयसंबन्धेन
विषयितावत्त्वं च पूर्वोक्तोभयसंबन्धेन, अत्रायमनुगमः प्रकृतपक्षतावच्छेदकावच्छिन्ने साध्यतावच्छे-
दकावच्छिन्नवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वोभयाभावविशिष्टरू-
पवत्त्वं लक्षणं, तादृशाभाववैशिष्ट्यं च रूपे स्ववृत्तित्वयं: किंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयि-
ताशून्यकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावीयविषयिताप्रयुक्तत्वविशिष्टस्वाधि-
करणत्वसंबन्धावच्छिन्नोभयाऽवृत्तिधर्मेतरधर्मानवच्छिन्नप्रतियोगित्वं नास्तीति प्रतीतिसिद्धोऽभावस्त-

न्निरूपितप्रतियोगित्वनिष्ठप्रतियोगितानिरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]ता-
निरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छेदक[6]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नाव-
च्छेदकतावत्त्व-स्वप्रयोजकाभावाधिकरणतावृत्तित्वोभयसंबन्धेन तादृशाधिकरणतावृत्तित्वं च स्वाव-
च्छिन्नविषयितानिष्ठाऽसाधारण्यविषयित्वाऽवृत्तित्वघटितोऽभयाभाववत्प्रयोजकतानिरूपितप्रयोज्यताव-
त्त्व-स्वविशिष्टप्रतीतिविषयितावच्छेदकरूपाभाववत्त्वोभयसंबन्धेन प्रतीतौ स्ववैशिष्ट्यं च स्वावच्छिन्न-
विषयिताशून्यत्व-स्वावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वोभयसंन्बधेन रूपनिष्ठप्रतियोगिताव-



१ अभावे । २ वृत्तित्वे । ३ अनुमितौ । ४ उत्तरत्वे । ५ निश्चये । ६ विषयितायाम् ।

च्छेदकसंबन्धश्च स्वविशिष्टविषयितानिष्ठभेदप्रतियोतितानवच्छेदकरूपावच्छिन्नप्रागुक्तोभयाभाववत्प्रयो-
जकतानिरूपितप्रयोज्यतारूपः विषयितायां स्ववैशिष्ट्यं च स्वावच्छिन्ननिरूपकताकत्व- स्वावच्छि-
न्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोभयसंबन्धेन, त्रितयाभावनिवेशकल्पे रूपे अभाववैशिष्ट्यंच
प्रागुक्तप्रथमसंबध-स्वप्रयोजकाभावाऽधिकरणत्वाऽवृत्तित्व-प्रत्येकप्रागुक्तविषयिताद्वयानवच्छेदकत्वैत-
त्रितयाभाववत्त्वोभयसंबन्धेनेति बोध्यम्, वस्तुतस्तु यद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानु-
मितित्वव्यापकोभयाभावप्रयोजकयदभावाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वमस्ति तदभावाधिक-
रणतायां विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविशिष्टस्वविषयिताप्रयोज्यत्वाभिधानमेव सम्यक्, एवं

च मेयत्वविशिष्टव्यभिचारे च नातिव्याप्तिः तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितित्वव्यापकोभ-
याभावप्रयोजकहेतुधर्मिकव्याप्त्यवगाहित्वाऽभावाधिकरणतायामेव विरोधिविषयिताप्रयुक्तत्वसत्त्वात् तत्र
विशिष्टान्तरशुद्धव्यभिचारविषयिताप्रयुक्तत्वस्य च सत्त्वात्, धूमव्यभिचारिवह्निर्धूमवान्वह्नेरित्यादौ च
मेयत्वविशिष्टव्यभिचारे च नातिव्याप्तिः तत्र विशेष्यदलघटकविरोधिविषयिताप्रयुक्तत्वं हि हेतौ व्या-
प्त्यवगाहित्वाभावाधिकरणतायामेवास्ति तस्या एव तादृशव्यभिचारविषयकनिश्चयोत्तरानुमितित्वव्याप-
कत्वात् तत्र च विशिष्टान्तरशुद्धव्यभिचारविषयिताप्रयोज्यत्वमस्त्येव तादृशोभयाऽभावप्रयोजिकायां पक्षे
साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामेव विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वविशिष्टस्वविषयिताप्र-

योज्यत्वसत्त्वात् अधिकरणताया ऐक्याभावात्, एवंच स्वविषयितानिष्ठप्रयोजकतायामसाधारण्य-विषयित्वाऽवृत्तित्वघटितोभयाभाववत्त्वमपि न विवक्षणीयं तद्धारणीयोक्तस्थलीयमेयत्वविशिष्टव्यभि-चारातिव्याप्तेरभावात्, एवमलक्ष्ये कुत्रापि विशिष्टे नातिव्याप्तिः, बाधघटितसत्प्रतिपक्षेऽव्याप्तिस्तु नि-यतज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकताश्रयज्ञानाविषयसत्प्रतिपक्षसंग्रहप्रयासेनैव वार्यते, हेतुमत्पक्षघटिता-साधारण्यसंग्रहस्तु यद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकमुभयाभावप्रयोजकाभावा-धिकरणत्वं तद्रूपावच्छिन्नविषयिताभिन्नत्वासाधारण्यविषयिताभिन्नत्वोभयाभाववद्विषयितानिरूपकताव-च्छेदकधर्मवत्त्वमिति विवक्षणेन भवति, एवंच विशेष्यदलघटकयद्रूपावच्छिन्नविषयकनिश्चये पक्ष-

धर्मिकहेतुमत्ताज्ञानाऽकालीनत्वघटितोभयाभावोपि न निवेशनीयः उक्तविवक्षयैवासाधारण्यमात्रसंग्रहात्, सर्वत्रासाधारण्यस्थले बाधस्वरूपासिद्ध्यन्यतरनियमेन तादृशदोषमादाय लक्षणसमन्वयात् मेयत्वविशिष्टासाधारण्यविषयितायाः शुद्धासाधारण्यविषयिताभिन्नत्वादेव नातिव्याप्तिः, अत्रायमनुगमः तादृशोभयाभावप्रयोजकीभूताभावविशिष्टविषयिताभिन्नत्वाऽसाधारण्यविषयिताभिन्नत्वोभयाभाववद्विषयितानिरूपकतावच्छेदकधर्मवत्त्वं लक्षणं, विषयितायामभाववत्त्वं च स्ववृत्तिर्यः किंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिनिष्ठाभावीयविरोधिविषयिताप्रयुक्तत्वविशिष्टाधिकरणतासंबन्धावच्छिन्नोभयाऽवृत्तिधर्मेतरधर्मानवच्छिन्नप्रतियोगित्वं ना- 

स्तीति प्रतीतिसिद्धोभावस्तन्निरूपितप्रतियोगितानिरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छेदक[3]तानिरूपितावच्छेदक[4]तानिरूपितावच्छेदक[5]तानिरूपितावच्छेदक[6]त्व—स्वनिरूपिताऽधिकरणतावृत्तित्वोभयसंबन्धेन अधिकरणतावृत्तित्वं च पूर्वोक्तसंबन्धेन, परंतु विशिष्टान्तरविषयितायां स्वविषयितायांच प्रागुक्तोभयाभावो न निवेशनीय इति बोध्यम् ॥ श्रीः ॥

विरोधिविषयितानतिरिक्तवृत्तियद्विषयिताशालिनिश्चयस्य
निश्चयान्तेन विवक्षिततत्वादिति ॥ ॥

१ निरूपितत्वे । २ अभावे । ३ वृत्तित्वे । ४ अनुमितौ । ५ उत्तरत्वे । ६ निश्चये ।

अत्र यदवच्छिन्ननिरूपकताकविरोधिविषयिता तादृशोभयाभावव्याप्येत्युक्तावसाधारण्याऽसंग्रहः असा-
धारण्यत्वावच्छिन्नविषयितायां निर्वाच्यविरोधिविषयितात्वाभावात् । नच यद्रूपावच्छिन्नविषयिताविरो-
धिविषयितानतिरिक्तवृत्तिरित्यभिधाने कथमसाधारण्यसंग्रहः असाधारण्यविषयिताया विरोधिविषयिता-
शून्याऽसाधारण्यज्ञाने सत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयितायां निरूप्यनिरूपकभावापन्नसा-
ध्यव्यापकीभूताऽभावप्रतियोगिहेतुमत्पक्षविषयिताशालिज्ञानभिन्नत्व-निरूप्यनिरूपकभावापन्नाऽसाधा-
रण्यविषयितावत्त्वोभयाभाववज्ज्ञानीयत्वस्य विवक्षणीयत्वात् तथाच तादृशहेतुमत्पक्षविषयितानिरूप-
कज्ञानमेवाऽसाधारण्यविषयकमुभयाभाववद्भवति तथाच तादृशपक्षविषयितानिरूपितसाध्याभावव्याप्य-

विषयिता विरोधिविषयिता भवतीति तत्संग्रहः । नन्वत्र यद्विषयितायां विरोधिविषयितानतिरिक्तवृ-
त्तित्वपर्यन्तनिवेशोऽफलः यद्विषयकविरोधिविषयकनिश्चयोत्तरानुमितित्वव्यापक उभयाभाव इत्यस्यैव
सम्यक्त्वात् । नच निर्वह्निः पर्वतो वह्निमानित्यत्र दोषैकदेशे पर्वतादावतिव्याप्तिः पर्वतो वह्निमानित्या-
कारकपर्वतविषयकविरोधिविषयकनिश्चयोत्तरानुमितिसामान्ये उभयाभावसत्त्वादिति वाच्यम् । अन-
तिरिक्तवृत्तित्वविवक्षणेपि ह्रदो वह्निमानित्यत्र जातिमान्वह्न्यभाववानिति ज्ञानेपि विरोधिविषयितान-
तिरिक्तवृत्तिवह्न्यभाववद्ध्रदविषयितायाः सत्त्वात् तदुत्तरानुमितौ उभयाभावाभावादसम्भवोतो यद्विषयि-
ताशालिनिश्चये अव्यापकविषयिताशून्यत्वं विवक्षणीयम् , एवञ्च प्रकृतेपि यद्विषयित्वाऽव्यापकविषयि-

ताशून्यविरोधिविषयकयद्विषयकनिश्चयविवक्षणे पर्वतविषयित्वाऽव्यापकविषयिताशून्यपर्वतविषयकविरो- विवेचना.
धिविषयिताशालिनिश्चयाऽप्रसिद्धेरेकदेशातिव्याप्तेरनवकाशात् । नचैवमपि गोत्वाभावो गोत्वाभाववान्
घटान्यघटादित्यत्र गोत्वाभावेतिव्याप्तिः गोत्वादिविषयिताया गोत्वाभावविषयिताव्यापकतया तद्वि-
षयित्वाऽव्यापकविषयिताशून्यगोत्वाभावविषयकविषयिताशालिगोत्वाभावो गोत्ववानिति निश्चयोत्तरा-
नुमितिसामान्ये उभयाभावसत्त्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयि-
ता यद्विषयित्वाऽव्यापिका तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं विवक्षणीयम्, ॥ २९९ ॥
तथाच गोत्वाभावत्वावच्छिन्नविषयितानिरूपितसमवायावच्छिन्नविषयिताया गोत्वाभावविषयित्वाऽव्यापि-

काया उक्तबाधभ्रमे सत्त्वेन तच्छून्यगोत्वाभावविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरतिव्याप्तिवि-
रहात् । नचैवमपि घटो द्रव्यभिन्न इत्यत्र बाधैकदेशे घटेऽतिव्याप्तिः घटो द्रव्यमित्याकारके घटविष-
यकविरोधिविषयिताशालिनिश्चये घटत्वावच्छिन्नविषयित्वाऽव्यापिका यद्रूपावच्छिन्नविषयितानिरूपित-
यद्रूपावच्छिन्नविषयिता तस्या अभावात्, समवायावच्छिन्नविषयितानिरूपितघटत्वावच्छिन्नविषयिता-
व्यापिकैव घट इति ज्ञाने घटे घटत्वस्य समवायेन भानात् बाधज्ञाने द्रव्यत्वं स्वरूपत एव भासत इ-
ति न तद्विषयिता किंचिद्रूपावच्छिन्ना तादृशनिश्चयोत्तरानुमितिसामान्ये उभयाभावस्य च सत्त्वादिति
वाच्यम्। यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयता यद्विषयित्वाऽव्यापिका तद्रूपावच्छिन्नवि-

सा० नि० ॥ २६० ॥

षयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वविवक्षणेऽतिव्याप्त्यभावात् घट इति ज्ञानेऽविद्यमानायाः समवायावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयताया घटो द्रव्यमिति ज्ञाने सत्त्वेन तच्छून्यघटविषयकविरोधिविषयिताशालिनिश्चयाऽप्रसिद्धेरिति चेन्न । स्वरूपं स्वरूपवद्भेदत्ववदित्यत्र स्वरूपवद्भेदत्ववद्भेदवति बाधैकदेशेऽतिव्याप्तेः स्वरूपवद्भेदत्ववद्भेदवत्स्वरूपमिति बाधज्ञाने बाधैकदेशनिरुक्तविशिष्टविषयित्वाऽव्यापिकायाः कस्या अपि निरुक्तविषयिताया अभावात् तादृशनिश्चयोत्तरानुमितिसामान्ये उभयाभावस्याक्षतत्वात्, यद्विषयितायां विरोधिविषयितानतिरिक्तवृत्तित्वनिवेशे तु तादृशैकदेशविषयिताया विरोधिविषयिताशून्यैकदेशमात्रविषयकज्ञाने सत्त्वेन नातिव्याप्तिरिति दिक् ॥ श्रीः ॥

नचैवं विरोधिविषयितानतिरिक्तवृत्तियदीयविषयिता तत्त्वमित्येतावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यमिति ॥

अत्र विरोधिविषयता पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावप्रतियोगितावच्छेदकताश्रयविषयता[1]विशिष्टविषयता[2]–तादृशविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयिताविशिष्टविषयतान्यतररूपा, विषयतायां[3] विषयतावैशिष्ट्यं[4] च स्वाधिकरणत्व–स्वनिरू-

१ साध्यप्रकारताख्यया । २ पक्षविशेष्यतादोषज्ञानीया । ३ विशेष्यताख्यायाम् । ४ प्रकारताख्यया ।

पितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन स्वाधिकरणत्वं च स्वविशिष्टप्रकारतानिरूपितत्व-स्वा-
वच्छेद्यविशेष्यतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतावत्प्रकारतानिरूपितत्व-स्वावच्छेद्य-
विशेष्यतानिरूपिततादात्म्यसम्बन्धाऽवच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टप्र-
कारतानिरूपितत्व-स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धाऽवच्छिन्ननिरूपकताकाधिकरणतावन्निरू-
पितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावावच्छिन्नप्रकारतानिरूपितत्वान्यतमसम्बन्धेन, अन्यतमघटक-
प्रथमसम्बन्धे प्रकारतायां स्ववैशिष्ट्यं च स्वावच्छेदकावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नप्रतियो-
गितासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेद्यत्व-स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदका-

वच्छिन्नप्रतियोगिताकाभावनिष्ठस्वाश्रयसामान्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभय-
स्वावच्छेदकावच्छिन्नस्वावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्नत्वानुपदमु-
क्तद्वितीयसम्बन्धावच्छिन्नत्वोभयान्यतरसम्बन्धेन, द्वितीयसम्बन्धे प्रकारतायां सांसर्गिकविषयतावत्त्वंच
स्वनिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितावच्छिन्नत्वानिष्ठावच्छेदकतानिरूपितावच्छेद-
कतावत्सम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, तृतीयसंबन्धेऽवच्छेदकतावैशिष्ट्यं च प्रकारतायां स्वाधिकरण-
वृत्तित्व-स्वावच्छेदकसंबन्धावच्छिन्नत्वाऽवच्छेदकतासम्बन्धावच्छिन्नस्वाभाववद्धर्मानवच्छिन्नत्व-स्ववृत्ति,
त्वैतच्चतुष्टयसंबन्धेन, अन्यतमशरीरे प्रथमसंबन्धनिवेशात् ह्रदो वह्निमानित्यत्र ह्रदो वह्न्यभाववान् ह्रदो व-

ह्निमद्भिन्न इति ज्ञानीयविषयतयोः संग्रहः, द्वितीयसंबन्धनिवेशात्पर्वतो वह्न्यभाववानित्यत्र पर्वतो वह्निमानिति ज्ञानीयविषयतासंग्रहः, तृतीयसम्बन्धनिवेशाद्धटो द्रव्यभिन्न इत्यत्र स्वरूपतो द्रव्यत्वावगाहिघटो द्रव्यमिति ज्ञानीयविषयतासंग्रहः, चतुर्थसंबन्धनिवेशात् ह्रदो वह्निमानित्यत्र वह्निमदवृत्तिमान् ह्रद इति ज्ञानीयविषयतासंग्रहः, एवं तुल्यवित्तिवेद्यतया भानमङ्गीकृत्य पक्षवृत्तिः साध्याभाव इत्यादिज्ञानीयविषयता संग्राह्येति दिक् ॥ श्रीः ॥

निश्चयत्वं च विशेषणविशेष्यतावच्छेदकभावाऽनापन्नविरोधिकोटि-
द्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वमिति ॥ ॥ ॥ २६२ ॥

ताद्दशज्ञानत्वं नाम प्रकारताविशिष्टप्रकारत्वाऽनिरूपकज्ञानत्वं प्रकारतावैशिष्ट्यं च स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व–स्वनिरूपकज्ञानीयत्व–स्वावच्छेदकावच्छिन्ननिरूपितविरोधितावच्छेदकधर्मावच्छिन्नत्व–स्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छेद्यत्व–स्वाऽभाववत्त्वैतत्सम्बन्धपञ्चकेन, एवं च ह्रदो वह्निमान्न वेति संशयीयवह्न्यादिप्रकारता प्रकारताविशिष्टप्रकारता तत्र वह्न्यभावप्रकारतानिरूपितविशेष्यतावच्छेदकह्रदत्वावच्छिन्नविशेष्यतानिरूपितत्वस्य तन्निरूपकताद्दशसंशयनिरूपितत्वस्य ताद्दशप्रकारतावच्छेदकवह्न्यभावत्वावच्छिन्ननिरूपितविरोधितावच्छेदकवह्नित्वावच्छिन्नत्वस्य ताद्दशप्रकारतानिरूपितह्रदनिष्ठविशेष्यतानिरूपितावच्छेदकत्वानवच्छेद्यत्वस्य ताद्दशप्र-

कारत्वाभाववत्त्वस्य च सत्त्वात् तत्प्रतियोगितावच्छेदकसम्बन्धश्च स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितत्वरूपः अयं च सम्बन्धः संशयीयकोटिप्रकारताया व्यधिकरणसम्बन्धः संशये वह्न्यभावादेर्धर्मितावच्छेदकत्वाभावात् निर्वह्निर्वह्निमानिति ज्ञानीया निर्वह्निः पर्वतो वह्निमानिति ज्ञानीया च प्रकारता न कापि तादृशी प्रथमज्ञानीयवह्निप्रकारतायां वह्न्यभावप्रकारताया अन्यसम्बन्धचतुष्टयेन सत्त्वेपि स्वाभाववत्त्वसम्बन्धेनाभावात् स्वावच्छेद्यावच्छेदकतानिरूपकविशेष्यतानिरूपितत्वसत्त्वेन तत्सम्बन्धावच्छिन्नस्वाभावस्य तत्राभावात् वह्न्यभावनिष्ठप्रकारतायां वह्निप्रकारतायाः स्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छेद्यत्वाभावात्, एवं द्वितीयज्ञानीयपर्वतत्वनिष्ठप्रकारतायां विरोधितावच्छेदकधर्मावच्छिन्नत्वमपि नास्तीति तादृशज्ञानद्वयं च तादृशनिश्चयत्वाक्रान्तम्, एवं निर्वह्निर्वह्न्यभाववान् निर्वह्निर्वह्निमानिति समूहालम्बनात्मकज्ञान च न तादृशनिश्चयत्वाक्रान्तम् वह्न्यभावावच्छिन्ने प्रकारतापन्नवह्निप्रकारतायास्तत्रैव प्रकारतापन्नवह्न्यभावप्रकारतायाश्चोक्तसम्बन्धैः परस्परविशिष्टत्वात् अतो वह्न्यभाववद्वह्न्यभावावच्छिन्नविषयित्वं तादृशनिश्चयाऽवृत्तीति, एवं ह्रदो वह्निमान् वह्निव्याप्यधूमवान्वह्न्यभाववानिति समूहालम्बनेपि न तादृशनिश्चयत्वमस्ति ह्रदे वह्नेर्वह्न्यभावस्य च परस्परविशेषणधर्मितावच्छेदकभावाऽनापन्नयोः प्रकारत्वात्, अत्र प्रथमसंबन्धानिवेशे पर्वतो वह्निमान् धूमान्यधूमादित्यत्र वह्न्यभाववद्भूतलादावतिव्याप्तिः पर्वतो वह्निमान् भूतलं वह्न्यभाववदिति

ज्ञानीयवह्न्यादिप्रकारताया अन्यसम्बन्धचतुष्टयेन परस्परविशिष्टत्वात् प्रकारताविशिष्टप्रकारताऽनिरूपकत्वरूपनिश्चयत्वस्य तादृशसमूहालम्बनेऽभावेन तादृशनिश्चयश्च वह्न्यभाववद्भूतलानवगाहिपक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानमेवेति तत्रच वह्न्यभाववद्भूतलविषयिताया अवृत्तित्वात्, द्वितीयसंबन्धानिवेशेऽसंभवः सर्वस्या अपि प्रकारतायाः समानधर्मितावच्छेदकज्ञानान्तरीयविरोधिप्रकारताविशिष्टत्वात्, तृतीयसंबन्धाऽनिवेशे ह्रदो वह्निमानित्यत्र पक्षे साध्यहेतुवैशिष्ट्यावगाहितादृशनिश्चयोऽप्रसिद्धः तत्र परस्परविशेषणविशेष्यतावच्छेदकभावाऽनापन्नयोः साध्यसाधनयोरेकस्मिन् धर्मिणि प्रकारत्वात्। नचैवं ह्रदो वह्निमान् वह्न्यभावादित्यत्र न कोपि दोषः स्यादिति विरोधितावच्छेदकेतरधर्मानव-

च्छिन्नत्वस्यापि विवक्षणायत्वात्, चतुर्थपञ्चमसम्बन्धानिवेशे निर्वह्निः पर्वतो वह्निमानिति साध्यवत्तानिश्च-
यस्यासंग्रह इति ध्येयम् ॥ श्रीः ॥

भ्रमान्यज्ञानीययद्दीयविषयितासामान्यं तादृशनिश्चयावृत्तितदीयवि-
षयिताया विवक्षणेन निर्वाहेऽपीति ॥ ॥ ॥

---

१ वस्तुतस्तु एव सम्बन्धपञ्चकनिवेशे ह्रदो वह्निमान् वह्निमत्पर्वतकालीनवह्न्यभाववत्पर्वतकालीनधूमादित्यत्र पक्षे साध्यवैशिष्ट्य—साध्यव्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयस्य उक्तसम्बन्धेन प्रकारताविशिष्टप्रकारतानिरूपकत्वरूपानिश्चय-

नन्वत्रोक्तनिश्चयस्य लक्षणघटकत्वे किं तत्कुक्षिप्रविष्टविरोधितावच्छेदकत्वं नाम यदि तद्वृत्तिता-
नवच्छेदकत्वं तदा ह्रदो वह्निमान धूमान्यधूमादित्यत्र जलवद्ध्रदेऽतिव्याप्तिः ह्रदो वह्निमान् वह्निव्या-

त्वानुपपत्तिः तन्निरूपितवह्न्यभावत्वावच्छिन्नप्रकारतायाः वह्नित्वावच्छिन्नप्रकारताविशिष्टत्वात् अतः चतुर्थपञ्चमस-
म्बन्धस्थाने स्वानिरूपकज्ञाननिरूपितत्वम् एकः सम्बन्धो वाच्यः, तथा चोक्तनिश्चय यवह्न्यभावत्वावच्छिन्नप्रकारतायाः
निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानीयप्रकारतायाश्च स्वानिरूपकज्ञाननिरूपितत्वात्संग्रहः, एवं तज्ज्ञानीयवह्न्यभावप्र-
कारतां स्वपदेनादाय निश्चयत्वानुपपत्तिवारणाय स्ववृत्तित्वघटितो नयसम्बन्धस्तृतीयो वाच्यः, वृत्तित्वघटकसम्बन्ध-
श्चोक्तसम्बन्ध एवेति ।



प्यधूमान्यधूमवान् जलवांश्चेति ज्ञानीयवह्निजलप्रकारतयोरुक्तसंबन्धैः परस्परविशिष्टत्वात् तन्निरूपक-
त्वेन तादृशज्ञानस्य निश्चयत्वासंभवेन जलानवगाहिसाध्यहेत्ववगाहिज्ञानस्यैव निश्चयत्वात् तत्र च
जलवद्ध्रदविषयितायाः अवृत्तित्वात् । नच विरोधितावच्छेदकावच्छिन्नत्वेत्यनेन स्वावच्छेदकावच्छिन्न-
स्वावच्छेदकसंबन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताऽवच्छेदकमुख्य-
विशेष्यतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नत्वविवक्षणान्नायं दोष इति वाच्यम् । ह्रदो वह्निमान् धू-
मान्यधूमादित्यत्र कालिकसंबन्धेन वह्न्यभावविशिष्टे ह्रदेऽतिव्याप्तेः पक्षे साध्यहेतुवैशिष्ट्यावगाहिनः
कालिकसंबन्धेन वह्न्यभावावगाहिज्ञानस्योक्तनिश्चयत्वाभावात् तेन संबन्धेन वह्न्यभावानवगाहिनि पक्षे

साध्यसाधनावगाहिनिश्चये तत्संबन्धेन वह्न्यभावविशिष्टह्रदविषयिताया अवृत्तित्वात् । नच तादृशप्रकार-तावच्छेदकावच्छिन्नत्वं परित्यज्य तादृशप्रकारताविशिष्टत्वं तृतीयसंबन्धो विवक्षणीयः वैशिष्ट्यंच स्वावच्छेदकरूपसंबन्धावच्छिन्नत्वसंबन्धेनेति वाच्यम् । यत्र निर्वह्नित्वसामानाधिकरण्येन वह्नेः साध्यता तत्र निर्वह्नित्वावच्छेदेन वह्न्यभाववन्निर्वह्निरूपबाधासंग्रहापत्तेः निर्वह्निर्वह्निमान् निर्वह्निर्वह्न्यभाववांश्चेति समूहालम्बनज्ञानीयवह्नितदभावप्रकारतयोः परस्परविशिष्टत्वाऽभावात्, तथाहि सामानाधिकरण्येन वह्निमत्ताबुद्धिं प्रत्यवच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य प्रतिबन्धकतया शुद्धसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या प्रकारता

तदवच्छेदकसंबन्धश्च पर्वतत्वादिव्यापकप्रतियोगिकत्वविशिष्टस्वरूपमेव निर्वह्नित्वव्यापकप्रतियोगिक-
स्वरूपसंबन्धावच्छिन्नप्रकारताया निरुक्तप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताव-
च्छेदकत्वाभावात् तादृशसमूहालम्बनज्ञानीयवह्न्यभावप्रकारता च न पर्वतत्वादिव्यापकप्रतियोगिकस्व-
रूपावच्छिन्ना तथाच तादृशप्रतिबन्धकतावच्छेदकप्रकारतायाः स्वावच्छेदकावच्छिन्नत्व-स्वावच्छेदकसं-
बन्धावच्छिन्नत्वोभयसंबन्धेन तादृशप्रकारतायामभावेनोक्तसंबन्धैः प्रकारताविशिष्टप्रकारताऽनिरूप-
के तादृशज्ञाने दोषविषयितासत्त्वादिति । नच तादृशप्रकारतावैशिष्ट्यं स्वावच्छेदकसंसर्गतावच्छेदक-
तात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गतानिरूपि-

तावच्छेद्यतावत्त्वघटितं न विवक्ष्यते किंतु संसर्गतावच्छेदकधर्मावच्छिन्नावच्छेदकताकसंसर्गताघटितमेव त-
थाच तादृशदोषविषयकसमूहालम्बनीयवह्न्यभावप्रकारतायामपि तादृशप्रतिबन्धकतावच्छेदकप्रकारता-
निरूपितसंसर्गतावच्छेदकीभूतस्वरूपत्वावच्छिन्नसंसर्गतानिरूपितावच्छेद्यत्वस्य सत्त्वात् नाव्याप्तिरिति
वाच्यम्। तथा निवेशे तत्रैव सामानाधिकरण्येन वह्न्यभाववन्निर्वह्नेरपि दोषत्वापत्तिः निर्वह्नित्वसामानाधिक-
रण्येन वह्नितदभावावगाहिसमूहालम्बनादिज्ञानस्य निश्चयत्वाभावेन तादृशसमूहालम्बनाद्यन्यज्ञानस्यैव
निर्वह्निर्वह्निमानित्यस्य तथात्वात् तत्रच सामानाधिकरण्येन वह्न्यभाववन्निर्वह्निविषयिताया असत्त्वादिति
चेन्न । स्वविशिष्टप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावत्त्व-



संबन्धेनोभयत्र प्रकारतावैशिष्ट्यस्य स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व-
स्वनिरूपितसंसर्गतावच्छेदककिंचिद्धर्मव्यापकप्रतियोगिकत्वेतरधर्मावच्छिन्नकिंचिद्धर्मव्यापकप्रतियोगिक-
त्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वोभयसंबन्धेन विवक्षितत्वात् किंचिद्धर्मावच्छिन्नव्यापकत्वावच्छि-
न्नत्वनिवेशेन सामानाधिकरण्येन वह्न्यभाववन्निर्वह्नौ न प्रागुक्तातिप्रसङ्गावकाशः, यत्र निर्वह्नित्वावच्छे-
देन वह्नेः साध्यता तत्र तत्सामानाधिकरण्येन दोषसंग्रहाय वह्नित्वावच्छिन्नप्रकारतायां वह्न्यभावत्वाव-
च्छिन्नप्रकारतावैशिष्ट्यमादाय साध्यसाधनदोषविषयकसमूहालम्बनस्य निश्चयत्वाभाव उपपादनीयः, नि-
र्वह्नित्वावच्छेदेन वह्निसाधनस्थले सामानाधिकरण्येन वह्न्यभावव्याप्यवत्पक्षस्य यदि दोषत्वमावश्यकं

तदा स्वावच्छेदकावच्छिन्नस्वावच्छेदकसंबन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकप्रकारताविशिष्टत्वान्यतरघटितसंबन्धपञ्चकेन वैशिष्ट्यं बोध्यम् । न चैवमपि ह्रदो वह्निमान्वह्न्यभाववद्ध्रदकालीनधूमादित्यत्र न कश्चिद्दोषः स्यात् पक्षे साध्यहेत्ववगाहितादृशनिश्चयाऽप्रसिद्धेरिति वाच्यम् । पक्षे साध्यावगाहिनिश्चयवृत्तित्व-पक्षे-हेत्ववगाहिनिश्चयवृत्तित्वोभयाभावस्य विवक्षणीयत्वात् । नन्वत्र ग्रन्थकाररीतिविरोधरूपदूषणाभिधानमसंगतं ह्रदो वह्निव्याप्यधूमवान् घटान्यघटादित्यत्र वह्न्यभाववद्ध्रदेतिव्याप्तेः ह्रदे वह्न्यभाववत्तादृशसाध्यहेतुविषयकसमूहालम्बनस्य निश्चयत्वाऽसंभवेन वह्न्यभाववद्ध्रदविषयितायाः पक्षे साध्यसाधनावगाहितादृशनिश्चयाऽवृत्तित्वादिति चेन्न ।

अनुमितिघटितलक्षणस्यातिव्याप्तत्वेपि अनाहार्यमानसज्ञानसामान्यघटितलक्षणस्य निर्दुष्टत्वे तात्पर्यात्, अनाहार्यमानसत्वमिच्छाविशिष्टान्यदोषविशेषाजन्यज्ञानत्वं तत्रेच्छाविशिष्टज्ञाने दोषत्वेनाभिमतताद्दशोदासीनज्ञानोत्तराहार्यतत्तद्व्यक्तिभेदो निवेशनीयः, तथाच ताद्दशदोषत्वेनाभिमतोदासीनज्ञानोत्तरपक्षविशेष्यकसाध्यहेतुवैशिष्ट्यावगाहिताद्दशाहार्यज्ञानमपि सामान्यान्तर्गतं तत्र नोक्तोऽभयाभावोऽस्तीति नातिव्याप्तिरित्यभिप्रायात्। ननु भ्रमान्यज्ञानीयमेयत्वविशिष्टव्यभिचारादिविषयितासामान्यस्य ताद्दशनिश्रयाऽवृत्तितया तत्रातिव्याप्तिवारणं कथमिति चेद्विशिष्टान्तराघटितत्वनिवेशनेनेति गृहाण, तन्निवेशश्च भ्रमान्यज्ञानीयस्वावच्छिन्नविषयितासामान्यं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतसाध्यव्याप्यहे-

तुवैशिष्ट्यावगाहिग्रहत्वव्यापकप्रकारताविशिष्टा यावन्तः प्रकारताविशिष्टप्रकारतानिरूपकानिश्चयास्तद-
न्तर्गतयद्यन्निश्चयास्तत्तन्निश्चयावृत्तिस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नभ्रमान्यज्ञा-
नीयविषयितासामान्यं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं लक्ष्यतावच्छेदके विशेषणमिति,
निश्चये प्रकारतावैशिष्ट्यंच स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वनिरूपितविशेष्यतावच्छेदकाव-
च्छिन्नविशेष्यतावत्त्वसंबन्धेन, तादृशनिश्चयत्वघटकप्रकारतावैशिष्ट्यघटकतृतीयसंबन्धघटकप्रतिबन्धक-
तायां निश्चयविशिष्टनिश्चयत्वानवच्छिन्नत्वं विशेषणं बोध्यं नातो विशिष्टद्वयाऽघटितत्वं निवेशनी-
यम्, अत्रायमनुगमः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वप्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वो-



भयाभाववृत्तिकिंचिद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्याकिंचिद्रूपावच्छिन्नविषयिताशालिनिश्च-
योत्तरानुमितिनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावनिरूपितप्रतियोगितानिरूपि-
तावच्छेदकं[1]तानिरूपितावच्छेदकं[2]तानिरूपितावच्छेदकं[3]तानिरूपितावच्छेदकं[4]तानिरूपितावच्छेदकं[5]तानि-
रूपितावच्छेदकं[6]तानिरूपितावच्छेदकं[7]तानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावद्धर्मविशिष्टध-
र्मवत्त्वं लक्षणम्, धर्मे धर्मवैशिष्ट्यं च स्वतादात्म्य–स्वविशिष्टरूपावच्छिन्नाऽविषयकप्रतीतिविषयता-
वच्छेदकत्वोभयसंबन्धेन रूपे स्ववैशिष्ट्यं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व-भ्रमान्यज्ञा-

नीयस्वा[1]वच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववत्पक्षे साध्यवैशिष्ट्यावगाहिसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिग्रहनिष्ठकिंचिद्रूपावच्छिन्नविशेष्यतानिरूपितकिंचिद्रूपावच्छिन्नप्रकारता नास्तीति सिद्धाभावाऽप्रतियोगिप्रकारतात्वव्यापकत्वविशि[2]ष्टोभयाभावाऽवृत्तितादृशाभावप्रतियोगितापरम्परावच्छेदक-

---

१ स्वपदग्राह्यं वह्न्यभाववद्ध्रदत्वम् ।

२ निरुक्ताभावाप्रतियोग्यसमूहालम्बनप्रकारतात्वविशिष्टेत्यस्योभयाभाववृत्तितादृशाभावीयप्रतियोगितानिरूपितपरम्परया ह्रदवृत्तिवह्न्यभावत्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वेऽन्वयः तथाच यादृशप्रकारत्वं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितावृत्तिभेदीयप्रतियोगितानिरूपितनिरुक्तसम्बन्धावच्छिन्नावच्छेदकत्वाभाववद्भवति तदेव प्र-

॥ २७० ॥

त्वोभयसंबन्धेन, भेदप्रतियोगितावच्छेदकताघटकसंबन्धश्च स्वविशिष्टप्रकारतानिरूपकत्वविशिष्टप्रागुक्तप्रकारताविशिष्टप्रकारताऽनिरूपकत्वविशिष्टनिश्चयावृत्तित्वसंबन्धः, प्रकारतायां स्ववैशिष्ट्यं च स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व–स्वावच्छेदकरूपसंबन्धावच्छिन्नत्वोभयसंबन्धेन, प्र-

कारत्वं ह्रदवृत्तिवह्न्यभावत्वावच्छिन्नविषयितावृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववद्भवतीति स्वरूप–स्वरूपघटितसामानाधिकरण्यसम्बन्धाभ्यां व्यापकत्वविशिष्टं तादृशोभयाभाववृत्त्यभावीयपरम्परयाऽवच्छिन्नावच्छेदकत्वमिति सर्वं समञ्जसम्।

१ अत्र स्वपदेन समूहालम्बनीयप्रकारता तद्वैशिष्ट्यञ्च समूहालम्बनप्रकारतायाम्।

कारतात्वव्यापकत्वं च भ्रमान्यज्ञानीयस्वावच्छिन्नविषयितात्वव्यापकत्वसंबन्धेन व्यापकत्वं च प्रागुक्तसंबन्धेनेति ॥ श्रीः ॥

परेतु घटाऽभावादिधर्मितावच्छेदककवह्न्यादिज्ञानं प्रति तद्धर्मितावच्छेदककवह्न्यभावादिमत्ताज्ञानस्य प्रतिबन्धकत्वे कल्पनीये धर्मितावच्छेदकभे-

१ तथाच निरुक्तवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वव्यापकप्रकारतात्वाधिकरणे स्वावच्छिन्नविषयितावृत्तिनिरुक्तनिश्चयाऽवृत्तित्वसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वाभाववत्त्वसम्बन्धेन ह्रदवृत्तिवह्न्यभाववत्त्ववतो भेदाभावेनान्यस्यैव कस्य चिद्भेदस्य तथात्वेन तन्निरूपितावच्छेदकत्वाभावरूपव्यापकत्वं विपरीतबाधतावच्छेदकेस्तीति भावः ।



देन तदकल्पनाप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकधर्मानिवेश्याऽनाहार्यवह्न्यादिविशिष्टबुद्धित्ववह्न्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावः कल्प्यत इति ॥

अत्राऽवच्छेदकावच्छेदेन ज्ञानस्य प्रतिबध्यत्वे वह्नित्वावच्छिन्नप्रकारतानिरूपितकिंचिद्धर्मव्यापकप्रतियोगिकत्वविशिष्टसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितसमवायसंबन्धाऽवच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानत्वावच्छिन्नंप्रति सं-

योगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभाव-
त्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपिताविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्ननिरवच्छि-
न्नावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतासंबन्धेन निश्चयस्य प्रतिबन्धकत्वं, सामानाधिक-
रण्येन ज्ञानस्य प्रतिबध्यत्वे विपरीतमूह्यम्, अयं प्रतिबध्यप्रतिबन्धकभावः पर्वतो वह्निमान् घटो वह्नि-
मानित्यादिज्ञानानां पर्वतो वह्न्यभाववान् घटो वह्न्यभाववानित्यादिज्ञानानां च नीलपर्वतो वह्निमान् पी-
तपर्वतो वह्निमानित्यादिज्ञानानां तद्विपरीतज्ञानानां च तद्भावस्तु अवच्छेदकावच्छेदेन प्रतिबध्यत्वे वह्नि-
त्वावच्छिन्नप्रकारतानिरूपितकिंचिद्धर्मव्यापकप्रतियोगिकत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपि-

तावच्छेदकत्वावच्छेद्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्नप्रकारतानिरूपितसमवा-
यसंबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानं प्रति संयो-
गसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावत्वा-
वच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितसमवायसंबन्धावच्छि-
न्नप्रकारत्वावच्छेद्यावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्ननिरवच्छिन्नाऽवच्छेदकताप्रतियोगिकपर्या-
प्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति, एवं सामानाधिकरण्येन बुद्धिंप्रति, एवं
घटवान् वह्निमान् पटवान् वह्निमानित्यादिज्ञानानां तद्विपरीतज्ञानानां च तद्भावः वह्नित्वावच्छिन्नप्रका-

रतानिरूपितकिंचिद्धर्मव्यापकप्रतियोगिकसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितावच्छेद-कत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रकारतानिरूपितसमवायसंबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकतात्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानं प्रति वह्नित्वावच्छिन्नप्रतियोगितासंब-न्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छेद्याभावत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपि-तविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्ननिरवच्छिन्नावच्छे-दकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति , एवं घटाभाववान् वह्निमान् पटाभाववान् वह्निमानित्यादिज्ञानानां तद्विपरीतज्ञानानां च तद्भावः वह्नित्वावच्छिन्नप्रका-



रतानिरूपितकिंचिद्धर्मव्यापकप्रतियोगिकसंयोगत्वावच्छिन्नसंसर्गतानिरूपितविशेष्यतानिरूपितावच्छेद-कत्वावच्छेद्यस्वरूपसंबन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारत्वाऽवच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धाव-च्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपितसमवायसंबन्धावच्छिन्ननिरवच्छिन्नधर्मविशिष्टान्याव-च्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानं प्रति वह्नित्वावच्छिन्नसंयोगसंबन्धाव-च्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपिताविशेष्यत्वावच्छिन्नाभावत्वावच्छिन्नस्वरूपसंबन्धाऽव-च्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितस्वरूपसंबन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारत्वावच्छिन्नाऽव-च्छेदकतानिरूपितप्रतियोगितासंबन्धावच्छिन्नप्रकारत्वावच्छेद्यावच्छेदकतानिरूपित समवायसंबन्धाऽव-

च्छिन्ननिरवच्छिन्नधर्मविशिष्टान्यावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानस्य प्रतिबन्धकत्वमिति, एवमेव सर्वत्र प्रतिबध्यप्रतिबन्धकज्ञानयोर्धर्मितावच्छेदकपरम्परायां यस्य स्वरूपतो भानं तद्वृत्तिधर्मान्तर्भावेण प्रतिबध्यप्रतिबन्धकभाव ऊहनीय इति दिक् ॥ श्रीः ॥

ज्ञानं ज्ञानसामान्यं तेन घटादिविषयकस्य कस्य चित्समूहालम्बनस्य तादृशज्ञानविरोधिबाधादिविषयकत्वेऽपि नातिप्रसङ्ग इति ॥

अत्र सामान्यपदोपादाने ह्रदो वह्निमानित्यत्र जातिमान् वह्न्यभाववानिति ज्ञानवारणायाव्याप-

कविषयिताशून्यत्वस्य ज्ञाने निवेशनीयतया तत एवोदासीनातिव्याप्तिवारणसंभवात्सामान्यपदं व्यर्थमिति शङ्कासमाधानमूह्यम् ॥ श्रीः ॥

स्वावच्छिन्नविषयकत्वव्यापकतादृशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति फलितार्थ इति ॥ ॥

प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारता तद्व्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारताविशिष्टग्रहत्वव्यापकप्रकारताविशिष्टग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकता तद्विषयिता यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्व-

व्यापिका तद्रूपवत्त्वं लक्षणम्, अत्र प्रकारताविशिष्टत्वं च स्वविशिष्टप्रकारतावत्त्वसंबन्धेन प्रकारतायां प्रकारतावैशिष्ट्यं च स्वावच्छेदकावच्छिन्नत्व-स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वैतत्रितयसंबन्धेन, तादृशप्रकारताविशिष्टग्रहनिष्ठप्रतिबध्यतानिवेशे पर्वतो वह्निमानित्यत्र पर्वतो वह्निमान् ह्रदश्च तथेति समूहालम्बनग्रहनिष्ठोदासीनप्रतिबध्यतामादाय वह्न्यभाववद्ध्रदेऽतिव्याप्तिः, तादृशग्रहत्वव्यापकप्रतिबध्यतानिवेशेऽसंभवः ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्याकारकग्रहत्वव्यापकप्रकारताविशिष्टग्रहत्वं ह्रदो वह्निमान् ह्रदो धूमवान् धूमो वह्निव्याप्य इत्यादिग्रहेषु वर्तते तत्र सर्वत्र कस्याश्चिदपि प्रतिबध्यताया यत्किंचिद्दोषज्ञाननिरूपिताया



अभावात्, अतः प्रतिबध्यतायां तादृशप्रकारताविशिष्टप्रकारत्वावच्छिन्नत्वं वक्तव्यं प्रकारतायां पक्षे साध्यहेत्ववगाहिग्रहत्वव्यापकत्वं च तादृशग्रहनिष्ठो यः किंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितकिंचिद्धर्मावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धः सामान्याभावः तदप्रतियोगित्वं तथाच पक्षे साध्यतद्व्याप्यहेतुवैशिष्ट्यावगाहिग्रहनिष्ठोक्ताभावाप्रतियोगिप्रकारताविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतावती यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नविषयिता यद्रूपावच्छिन्नविषयिताशाल्यव्यापकविषयिताशून्याऽनाहार्यनिश्चयत्वव्यापिका तद्रूपवत्त्वं लक्षणम्। नन्वत्र पर्वतो वह्निमानित्यत्र पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिः पाषाणमयत्ववत्पर्वतविषयिताया अपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपि-

तद्वह्नित्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्य तद्वारणेऽसाधारण्येऽव्याप्तिः ज्ञानवैशिष्ट्यावच्छिन्नत्वा-ऽसाधारण्यविषयित्वानवच्छेद्यत्वोभयाभावं तत्र निवेश्योक्तातिव्याप्त्यव्याप्तिवारणे गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधेऽव्याप्तिरिति चेन्न । तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं किंचिद्रूपावच्छिन्नविषयित्वा-ऽव्यापकविषयिताशून्यानाहार्यत्वादिविशिष्टयद्रूपावच्छिन्नविषयिताशालिनिश्चयनिष्ठभेदप्रतियोगिताऽवच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितानवच्छेदकं तद्रूपवत्त्वमिति वक्तव्यं पाषाणमयत्ववत्पर्वतविषयिता-

घटकपदार्थनिष्ठसमुदायत्वं न तादृशज्ञानवैशिष्ट्यादिघटितसमुदायवृत्तिसमुदायत्वस्यैव तादृशत्वात् तच्च न पाषाणमयत्ववत्पर्वतविषयकतादृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकमिति नातिव्याप्तिः, इदानीमसाधारण्यसंग्रहाय तादृशनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानाकालीनत्वासाधारण्यविषयकत्वोभयाभाववत्त्वं विशेषणं देयं तथाच सति पक्षविशेष्यतानिरूपितसाध्यप्रकारतात्मकनिरुक्तप्रकारताविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपिताऽसाधारण्यविषयकनिश्चयनिष्ठप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकीभूतं यत्पक्षधर्मिकहेतुमत्ताज्ञानवैशिष्ट्याऽसाधारण्यादिविषयिताघटकपदार्थगतसमुदायत्वं तत्पक्षधर्मिकहेतुमत्ताज्ञानकालीनोक्तोभयाभाववदसाधारण्य-

विषयकताद्दशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकं भवतीति नासाधारण्याऽव्याप्तिः । न चैवमपि कपिसंयोग्येतत्त्वादित्यादौ कपिसंयोगाभाववद्वृक्षेतिव्याप्तिः कपिसंयोगाभाववत्ताज्ञानस्य विशिष्टज्ञानत्वेनैव प्रतिबन्धकतया ताद्दशप्रतिबन्धकतावच्छेदकाऽनाहार्यत्वादिविशिष्टनिश्चयीयकपिसंयोगाभाववद्वृक्षाविषयितावद्भेदस्य कपिसंयोगाभाववान्वृक्ष इत्यनाहार्यनिश्चयेऽभावादिति वाच्यम् । निश्चयेऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्य निवेशनीयतयाऽव्याप्यवृत्तित्वप्रमाविशिष्टकपिसंयोगाभाववद्वृक्षविषयकज्ञाने सामान्यतः प्रतिबन्धकतायामुत्तेजकीभूताऽव्याप्यवृत्तित्वज्ञानाभावविशिष्टताद्दशनिश्चयीयकपिसंयोगाभाववद्वृक्षविषयितावद्भेदस्य सत्त्वेन ताद्दशप्रतिबन्धकतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकाऽव्याप्यवृत्तित्वज्ञानाभावघटितसमुदायवृत्तिसमुदायत्वस्याऽव्याप्यवृत्तित्वभ्रमानास्कान्दितकपिसंयोगाभाववद्वृक्षविषयकताद्दशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकतयातिव्याप्तेरभावात्, अत्र मेयत्वविशिष्टव्यभिचारवारणाय विशिष्टान्तराऽघटितत्वमपि वक्तव्यं तच्चैतेन–कल्परीत्या यत्किंचित्प्रतिबन्धकताघटितं वाच्यम्, तथाच ताद्दशप्रकारत्वावच्छिन्नयत्प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकपर्याप्त्यनुयोगितावच्छेदके ताद्दशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकत्वं तत्प्रतिबन्धकतावच्छेदकविषयितासामान्ये स्वावच्छिन्ननिरूप्यतावत्त्वं वक्तव्यं व्याप्तिप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्ध-

कतावच्छेदकविषयितासामान्यान्तर्गतशुद्धव्यभिचारत्वावच्छिन्नविषयितायां मेयत्वविशिष्टव्यभिचारत्वा-
वच्छिन्ननिरूप्यत्वाभावान्नातिव्याप्तिः । नचैवं सर्वं गगनवदित्यत्र गगनाभाववद्धटादिरूपबाधे-
ऽव्याप्तिः तादृशप्रतिबन्धकतावच्छेदकविषयितासामान्यान्तर्गतगगनाभाववत्पटादिविषयितायां ता-
दृशघटनिरूपितत्वाभावादिति वाच्यम् । तादृशविषयितायां स्वावच्छिन्नविषयित्वाऽव्यापकविषयि-
ताशून्यज्ञानीयत्वनिवेशेन तद्वारणात्, एवं ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदत्वाव्यापकविष-
यिताशून्यह्रदो वह्न्यभाववानिति ज्ञानीयवह्न्यभावविषयिताया अपि बाधप्रतिबन्धकतावच्छेदकत-
या तद्विषयितायां दोषनिरूप्यत्वाभावादव्याप्तिः, अतो यद्रूपावच्छिन्नविषयितासामान्यमवच्छेदकं

तद्रूपावच्छिन्नविषयितासामान्ये स्वावच्छिन्ननिरूप्यता विवक्षणीया तथाच ह्रदो वह्निमानित्यत्र जातिमद्वह्न्यभाववद्ध्रदेऽतिव्याप्तिः जातिमद्वह्न्यभाववद्ध्रदविषयित्वाऽव्यापकविषयिताशून्यज्ञानीयवह्न्य-भाववद्ध्रदविषयितासामान्यस्य तादृशप्रतिबन्धकतावच्छेदकत्वं नास्ति तद्विषयितायाः जातिमान्व-ह्न्यभाववानिति ज्ञानसाधारण्यात्, किंतु जातिमद्वह्न्यभाववद्ध्रदविषयितासामान्यमेव तदवच्छेद-कं तत्रच तन्निरूप्यत्वमक्षतमेवेति तादृशविषयितायां यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्य-ज्ञानीयत्वमपि विशेषणं बोध्यम्, एवं हेतुमत्पक्षघटिताऽसाधारण्यसंग्रहाय तादृशविषयितायामसाधारण्य-विषयिताभिन्नत्वाऽसाधारण्यविषयितात्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयाभाववत्त्वमपि विशेषणं

बोध्यम्, अत्रायमनुगमः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारता-
साध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारता-शालिग्रहनिष्ठकिंचिद्रूपाऽवच्छिन्नविशेष्यतानिरूपितकिंचि-
द्रूपावच्छिन्नप्रकारता नास्तीति प्रतीतिसिद्धसामान्याभावाऽप्रतियोगिप्रकारताविशिष्टप्रकारत्वावच्छिन्नप्र-
तिबध्यतानिरूपितप्रतिबन्धकताविशिष्टधर्मवत्त्वं लक्षणम्, प्रतिबन्धकतावैशिष्ट्यंच संबन्धद्वयेन तत्र प्रथमः
स्वनिरूपितावऽच्छेदकतात्वाऽवच्छिन्नपर्याप्त्यनुयोगिताऽवच्छेदकधर्मनिष्ठकिंचिद्रूपावच्छिन्नविषयित्वाऽ-
व्यापकविषयिताशून्यकिंचिद्रूपावच्छिन्नविषयिताशाल्यव्याप्यवृत्तित्वभ्रमानास्कन्दितानाहार्याप्रामाण्यज्ञा- 
नानास्कन्दितपक्षधर्मिकहेतुमत्ताज्ञानाऽकालीनत्वा-ऽसाधारण्यविषयकत्वोभयाभाववन्निश्चयनिष्ठभेदप्र-

तियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेकत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगिता-
निरूपितावच्छेदक[1]तानिरूपितावच्छेदक[2]तानिरूपितावच्छे[3]दकतानिरूपितावच्छे[4]दकतानिरूपितावच्छेद[5]-
कतानिरूपितावच्छे[6]दकतानिरूपितावच्छे[7]दकतानिरूपितावच्छे[8]दकतानिरूपितावच्छे[9]दकतानिरूपिताव-
च्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकत्वरूपः, अपरस्तु स्वनिरूपितावच्छेदकतावृत्तिकिंचिद्रूपावच्छिन्न-
विषयित्वाऽव्यापकविषयिताशून्याऽनाहार्यज्ञानीयकिंचिद्रूपावच्छिन्नविषयितानिष्ठभेदप्रतियोगितावच्छेद-
कत्वं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितानिरूपितावच्छे[1]दकतानिरूपितावच्छे[2]दकतानिरूपितावच्छे-
[3]दकतानिरूपितावच्छे[4]दकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेकदतावद्धर्मावच्छिन्नत्वनिष्ठावच्छेद-

कताभिन्ना सती किंचिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वनिष्ठावच्छेदकताभिन्ना सती विषयितात्वनिष्ठावच्छेदकताभिन्ना सती असाधारण्यविषयिताभिन्नत्वघटितोभयाभावनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकताद्दृशावच्छेदकतानिरूपिका या विषयितानिष्ठावच्छेदकता तद्विशिष्टत्वरूपः, तद्विशिष्टत्वं च स्वनिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठाऽवच्छेदकतानिरूपितविषयिताव्यापकत्वनिष्ठाऽवच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वाव-

च्छिन्नप्रतियोगिताकाऽभाववत्त्वोभयसंबन्धेन, अत्रं भेदप्रतियोगितावच्छेदकतावच्छेदकसंबधश्च स्वावच्छिन्ननिरूप्यतारूपः, अत्रापि क्वचिदव्याप्तिपरिहारंप्रकारः स्वयमूहनीयः ॥ श्रीः ॥

आहार्यज्ञानसामग्र्यास्तादृशविषयिताप्रयोजकत्वासिद्धेः विपरीतज्ञानाभावघटितायास्तादृशविषयिताप्रयोजकानाहार्यज्ञानसामग्र्याश्चाहार्यज्ञानाऽजनकत्वात् तादृशग्रहत्वव्यापिका वह्निमत्त्वादिप्रकारितानिरूपिता तादृशपर्वतादिविषयिता साच न प्रतिबध्यतावच्छेदिकेतीति ॥

१ गगनाभाववदभाववत्कालीनघटपक्षकगगनसाध्यकस्थलेऽव्याप्तिः ।

नन्नु अत्राहार्यस्थले अव्याप्त्यभिधानं किमभिप्रेत्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितनिर्वह्नित्वप्रकारतायास्तादृशप्रकारतात्वेन व्यापकत्वमभिप्रेत्य वा तत्तद्व्यक्तित्वेन, प्रथमे तु निर्दोषत्वमनुपदं स्वयमेव वक्ष्यते, द्वितीये असंभव एव ह्रदो वह्निमानित्यत्रापि पक्षे साध्यादिवैशिष्ट्यावगाहिग्रहत्वं ह्रदो वह्निमान् ह्रदो वह्निमद्ध्रदवान् वह्निमद्ध्रदो वह्निमानित्यादिषु ज्ञानेषु वर्तते तत्र सर्वत्र समानाकारकज्ञानविषयितायाअभेदेपि ह्रदो वह्निमानिति ज्ञानीयप्रकारताव्यक्तेरभावात् तादृशप्रकारताव्यक्तेस्तद्व्यक्तित्वेन व्यापकत्वाऽसंभवात् । नच प्रकारतायां व्यापकत्वमभिप्रेत्य नेयं शङ्का अपितु प्रतिबध्यतायां स्वावच्छेदकप्रकारतावत्त्वसंबन्धेन तथोक्तज्ञानेषु सर्वत्र वह्न्यभाववद्ध्रदविषयकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यतायास्तादृशसंबन्धेन सत्त्वेनाहार्यस्थलाव्याप्त्यभिधानं युक्तमिति वाच्यम् । तथापि नियताहार्यज्ञाने तादृशसंबन्धेन प्रतिबध्यताविरहेणासंभवस्यैव सत्त्वात् आहार्यस्थलीयदोषसाधारण्याय कृतलक्षणे आहार्यभेदनिवेशशङ्काया असंभवात् । मैवम् । प्रकारतायास्तद्व्यक्तित्वेनैव व्यापकत्वमभिप्रेतं तादृशग्रहे विशेषणान्तरमप्यभिप्रेतं तच्च साध्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्त्यवच्छेदकत्वानवच्छेद्यप्रकारतानिरूपितपक्षतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्तिविशेष्यताशालित्वे सति साध्यतावच्छेदकपर्याप्तावच्छेदकताकविषयतानिरूपितव्याप्तिविषयतानिरूपितहेतुतावच्छेदकपर्याप्त्यवच्छेदकताकविशेष्यत्वावच्छेद्यावच्छेद्यत्वानवच्छिन्नतादृशप्रकारतानिरूपिततादृशपक्षविशे-

ष्यताशालित्वं, तथाच ह्रदे वह्निसाधने ह्रदो वह्निमानिति ज्ञानमेव तादृशमिति न कोपि दोषः ॥ श्रीः ॥

तादृशमताश्रयणे पर्वतो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादेर्दोषताप्रसङ्गात् ॥

ननु तन्मते ज्ञानत्वेनैव प्रतिबध्यप्रतिबन्धकभावस्वीकारात् घट इति ज्ञानेपि प्रतिबन्धकतासत्त्वात्सर्वत्रासंभव एव कुतो नाभिहितः मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वस्य वक्तव्यतया शुद्धवह्न्यादेरपि निरुक्तलक्षणाश्रयत्वेन विशिष्टान्तरतया तद्घटितत्वात्, एवं तन्मते प्रतिबध्यप्रतिबन्धकभावस्य तत्पुरुषीयत्वादिघटिततया नानापुरुषीयनिश्चयसाधारणनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां न संभवति, यदि यस्य ज्ञानस्य प्रतिबन्धकतावच्छेदकसंबन्धः प्रसिध्यति तस्यैव

प्रतिबन्धकत्वं घट इति ज्ञानस्य तादृशसंबन्धाऽप्रसिद्धेर्न तत्र प्रतिबन्धकतेत्युच्यते तदा तद्ध्रदो वह्निमानित्यत्र बाधेऽव्याप्तिः तस्य वह्न्यभाववद्ध्रदघटितत्वादिति । मैवम् । यत्किंचित्प्रतिबन्धकताघटितलक्षणस्य कर्तव्यत्वात् तथाच यत्किंचित्कालपुरुषीयनिश्चयत्वव्यापकत्वं यत्प्रतिबन्धकतायामस्ति तत्प्रतिबन्धकताघटितविशिष्टान्तराघटितत्वस्य वक्तव्यत्वादिति ॥ श्रीः ॥

तद्धर्मावच्छिन्नभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य प्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकतद्धर्मस्वरूपत्वेपि तादृशभेदकू-

टावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कल्पनापेक्षया तद्विशिष्टस्यैकस्यैव भेदस्य लाघवेन कल्पयितुमुचितत्वादित्यभिप्राय इति ॥ ॥

ननु एकभेदस्वीकारे कथं लाघवं भेदप्रतियोगितावच्छेदकधर्मेषु क्लृप्तेषु भेदत्वकल्पने एव लाघवात्, अतिरिक्तभेदकल्पने तत्रानन्तपदार्थानां संबन्धः कल्पनीयः तस्य च भेदस्य तादृशप्रतियोग्यादिष्वनन्तेषु संबन्धः कल्पनीय इति चेदत्रायमाशयः—भेदस्य प्रतियोगितावच्छेदकापेक्षयाऽतिरिक्तत्वमेवाभिप्रेतं नतु कुत्राप्यन्तर्भावोपि तादृशभेदकूटवत्त्वप्रकारकप्रमाविशेष्यत्वाभावे एव तादृशभेदत्वं कल्पनीयम्, भेदकूटस्यैकत्र द्वयमिति रीत्या भानाङ्गीकारेणेदं, भावप्रतियोगिकाभावस्य जगदीशोक्तरीत्या भावस्वरूपत्वाङ्गीकरे तु तादृशभेदकूटप्रकारकप्रमाविशेष्यत्वाभावस्यापि प्रतियोगितावच्छेदकत्वसंभवादगतिरेवेति ध्येयम् ॥ श्रीः ॥

इति श्रीवृन्दावननिवासिसुप्रसिद्धपदवाक्यप्रमाणपारावारीणश्रीमत्त्र्यन्तपथप्रतिष्ठापनदेशिकश्रीगोवर्धनरङ्गाचार्यस्वामिप्रणीता गादाधरीसामान्यनिरुक्ति-"नवीनविवेचना" समाप्तिमगमत्।

दण्डवान् नास्तीत्यादौ दण्डत्वनिष्ठावच्छेदकता दण्डनिष्ठावच्छेदकतया निरूपिता दण्डनिष्ठावच्छेदकता न दण्डत्वनिष्ठावच्छेदकतया निरूपिता द्वयोरपि परस्परं निरूपितत्वे दण्डवान्नास्तीत्याकारकबुद्धिं प्रति दण्डवत्वानिति बुद्धेः प्रबिन्धकत्वं नतु दण्डत्वविशिष्टवत्वानिति बुद्धेः ततो दण्डत्वनिष्ठ-

निरवच्छिन्नावच्छेदकताशालिबुद्धित्वेन प्रतिबध्यप्रतिबन्धकभावो वाच्यः निरवच्छिन्नत्वमवच्छेदकत्वाऽनिरूपकत्वं, तच्च न संभवति, दण्डत्वनिष्ठावच्छेदकताया दण्डनिष्ठावच्छेदकतानिरूपकत्वात्, यदि च निरवच्छिन्नत्वमवच्छेदकताविशिष्टान्यत्वं वैशिष्ट्यंच स्वनिरूपकत्व-स्वाऽनिरूपकनिरूपितत्वोभयसंबन्धेनेत्युच्यते तदा गौरवम्, एवं दण्डेन दण्डत्वावगाहिदण्डत्वेन दण्डावगाहिदण्डवाद्विशिष्टवान्नास्तीति बुद्धिं प्रति दण्डविशिष्टवानिति बुद्धेः प्रतिबन्धकत्वमापद्यते इति ॥ ॥ श्रीः ॥



इदं पुस्तकं श्रीकृष्णदासात्मज-गङ्गाविष्णोः मोहमयीनिकटवर्ति-कल्याणस्थ-"लक्ष्मीवेङ्कटेश्वराख्य" मुद्रणयन्त्रालयेऽङ्कनमभूत्। संवत् १९५० शकाब्दाः १८१५

शिरोमणेरन्तिमभाववर्णनं गदाधरः संप्रथयाम्बभूव ।
गदाधरस्यान्तिमभावपत्रिकां चकार रङ्गार्यसुधीर्महात्मा ॥

श्रीरङ्गदेशिककवीन्द्रविनिर्मितेयं वर्वर्ति सर्वभुवने तु विवेचनेति ॥ तस्या इदं कविवराः पृथु वृत्तजालं संश्रूयतां निखिलमेव निरूप्यते हि ॥ १ ॥ बाङ्गालपत्रमिति नाम तु कल्पयित्वा झैसूरपत्तननिवासिमहामनीषी ॥ आन्ध्रायसाक्षरकमुद्रणपूर्वकं तामात्मीयकौशलसमं प्रथयाम्बभूव ॥ २ ॥ एतद्व्याख्यारत्नं यदुपज्ञं तस्य तत्र नाम्नोऽपि॥ उल्लेखाभावो यः स एव तस्यास्ति कौशलोल्लेखः॥३॥पाण्डित्यविज्ञस्य तु पण्डितेन्द्रैरेतन्न शोच्यं खलु कृत्यजातम्॥ जीर्णेषु पत्रेषु दुरूहवर्णैर्यन्मुद्रणं शोच्यमिदं तदेव॥४॥

तच्छोकपरिहाराय सुदर्शनसुधीः स्वयम् ॥ कृतोद्यमो मुद्रणाय तस्याः कल्याणमाययौ ॥ ६ ॥ श्रीमाँल्लक्ष्मीवेंकटेशाख्ययन्त्राधीशो गङ्गाविष्णुरेवं गृहीत्वा ॥ तस्यानुज्ञां नैजयन्त्रालये तां समुद्रयाथो सुप्रसिद्धामकार्षीत् ॥ ६ ॥

❀ निवेदयिता–यथार्थवादी ❀

पुस्तक मिलनेका ठिकाना–गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" छापाखाना. कल्याण–(मुंबई.)

॥ इति सामान्यनिरुक्तिविवेचना समाप्ता ॥